# DAIVATABRAMHANA

AND

# SHADBINGSHABRAMHANA

OF THE

## SAMAVEDA

WITH THE COMMENTARY OF

## SAYANACHARYA

EDITED AND PUBLISHED BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent, Free Sanskrit College, Calcutta.*

SECOND EDITION

CALCUTTA:

PRINTED AT THE SARASWATI PRESS.

প্রিণ্টার শ্রীঈশ্বরমোহন মুখোপাধ্যায়। ২০ নং কামাপুকুর লেন।

1881.

To be had from Pandit Jibananda Vidyasagara, B. A.
Superintendent Free Sanskrit College, Calcutta.

सामवेदस्य

# दैवतब्राह्मणम् ।

तथा

# षड्विंशब्राह्मणम् ।

सायणाचार्य्यकृतभाष्यसहितम् ।

---

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च ।

---

कलिकातानगरे

सरस्वती यन्त्रे मुद्रितम् ।

---

इं १८८१ ।

# भाष्यकृतोभूमिका ।

---

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशत्सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणानान्तु व्याख्यानं सम्प्रवर्त्तते ॥ ५ ॥
अष्टौ हि ब्राह्मणा ग्रन्थाः प्रौढं ब्राह्मणमादिमम् ।
षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत् ॥ ६ ॥
आर्षेयं देवताध्यायो भवेदुपनिषत्ततः ।
संहितोपनिषद्वंशो ग्रन्था अष्टावुदीरिताः ॥ ७ ॥
तत्राद्या ब्राह्मणग्रन्थाश्चत्वारो व्याकृताः पुरा ।
देवताध्यायसंज्ञस्तु ग्रन्थो व्याक्रियतेऽधुना ॥ ८ ॥
साम्नां निधनभेदेन देवताध्ययनादयम् ।
ग्रन्थोऽपि नामतोऽन्वर्थो देवताध्याय उच्यते ॥ ९ ॥
तत्राद्ये बहुधा साम्नां देवताः प्रीतिकीर्त्तिनाम् ।
द्वितीये छन्दसां वर्णास्तेषामेव च देवताः ॥ १० ॥
तृतीये तन्निरुक्तिश्चेत्येवं खण्डार्थसंग्रहः ॥ ११ ॥

# दैवतब्राह्मणम् ।

हरिः ओम् ।

तत्रादौ साम्नां निधनभेदेन देवताभिधानाय ता एवानु क्रमते—

**१ । अग्निरिन्द्रः प्रजापतिः सोमो वरुण-स्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी ।**

एता सामदेवताः इति शेषः

तत्रादावग्निदैवत्यानि सामान्याह—

**२ । इडानिधनानि पदनिधनानीकारनि-धनानीत्याग्नेयानीति ।**

निधनं नाम पञ्चभक्तिकस्य सप्तभक्तिकस्य साम्नोऽन्त्यो भागः । सर्वत्र सामतच्चतुर्विधं स्वरोनिधनं मिडायागिति । स एवान्तर्णिधनं बहिर्णिधनमिति द्वेधा । तत्र निधना दित्रितयव्यतिरिक्तस्य स्वर इति रूढ्या नामधेयम् । इडा निधनानीति—कालेयरौरवादीनि । वाह्यावरनैरपेक्षेण ऋगन्त्यपदान्येव यत्र निधनस्थानीयानि तानि पदनिध-नानि यौधाजय सद्दिताद्रीनि । ईकारनिधनानि वैरा जादीनि । उक्तत्रिविधनिधनानि यानि सामानि तान्या-ग्नेयानि अग्निदेवताकानि ।

अथैन्द्रदैवत्यान्याह—

३। सर्वाणि निधनवन्त्यैन्द्राण्यन्यान्यादिष्टेभ्यः।

आदिष्टेभ्य. इडानिधनादिभ्य. वक्ष्यमाणेभ्यो व्यतिरिक्तानि यानि निधनवन्ति सन्ति तानि सर्वाण्यैन्द्राणीति जानीयात्।

अथ प्रजापतिदैवताकान्याह—

४। सर्वाणि स्वराणि प्राजापत्यानि—

स्वर्यमाणम् उक्तलक्षण ऋगन्त्याक्षर हाइ कारय स्वरनिधन वदन्ति प्राजापत्यानीति।

साम स्वयमेवोदाहरति—

५। यथा वामदेव्यम्।

एतच्चाधिकारयुक्तस्योदाहरणम्।

अथ सौमदैवत्यान्याह—

६। ऋक्सामानि सौमानि—

यानि ऋगक्षराणि स्तोभादिरहितानि केवलतानमात्रयुक्तानि तान्येव ऋक्सामानि।

स्वयमेव तान्युदाहरति—

७। यथौशनकावे।

अथ वरुणदैवत्यान्याह—

८। बाहुनिधनानि वारुणानि—

वाङ्निधनवन्ति वाङ्निधनानि ।

उक्तलक्षणं साम उदाहरति—

९ । यथा यज्ञायज्ञीयम् ।

अथ त्वाष्ट्रदैवत्यान्याह—

१० । अक्षरानुस्वाराणि त्वाष्ट्राणि—

अक्षरमनुस्वर्य्यते येषु तानि तथोक्तानि ।

तान्युदाहरति—

११ । यथा वारावन्तीयञ्चाभिवर्त्तश्च ।

अथाङ्गिरोदेवताना लक्षणमाह—

१२ । स्वःपृष्ठान्याङ्गिरसानि ।

अभिसोमास आयव इत्यादिषु गातव्यानि स्वःपृष्ठानि आङ्गिरसानि ।

अथ पूषदेवत्याना लक्षणमाह—

१३ । स्वर्णिधनानि पौषाणि ।

काशीतदैवोदासप्रभृतीनि स्वर्णिधनानि ।

अथ सरस्वतीदेवतान्याह—

१४ । कयानश्चित्र आभुवदापवस्वसहस्त्रिणमिति वाङ्निधने सारस्वते ।

यद्यपि वाङ्निधनानि वारुणानीति पूर्व्वमेवोक्तं तथाप्य नयोरुत्पन्ने एव वाङ्निधने सारस्वते, अतएव द्वय-व्यतिरिक्ताना वारुणत्वादस्यापुनरुक्तिः ।

अथैन्द्राग्नलक्षणमाह—

१५। य आनयत्परावत इत्यैन्द्राग्ने।

य आनयदित्यत्र ये सामनी उत्पन्ने, ते इन्द्राग्नीदेवत्ये।

अथाग्नेयैन्द्रयोः सामनी आह—

१६। सुतं रयिष्ठाः सहोरयिष्ठा इत्याग्नेयैन्द्रे।

उपनीहरिभिः सुतमित्यस्यान्ते 'सुतंरयिष्ठाः'—इत्येतन्नीयते, तथा 'सहोरयिष्ठा'—इत्येतदपि। ते उभे आग्नेयैन्द्रे एव।

निधनभेदेन सर्वेषां साम्नां सामान्येनाग्न्यादीन्द्राग्निपर्यन्ता दश देवता द्रष्टव्याः। आग्नेयैन्द्रयोरनिर्देशेऽप्यैन्द्राग्नस्यैव विपर्यासादनन्यत्वम्।

अथ प्रकारान्तरेण निधनवशात् सर्वसाम्नां देवताभिधानाय ता एवानुक्रमते—

१७। वसवो रुद्रा आदित्या विश्वे देवाः।

यथाग्न्यादयः प्रत्येकं सामदेवता, यथा वस्वादयोऽपि सङ्घात्मकाः सर्वेषां साम्नां निधनचतुष्टयभेदेन देवता।

अथ निर्दिष्टक्रममेतासां सामानि विभज्य दर्शयति—

१८। वसूनां स्वराणि रुद्राणां निधनवन्त्यादित्यानामैडानि विश्वेषां देवानां वाङ्निधनानि।

स्वरनिधनादिभेदेन सामान्यभागानां चातुर्विध्यम्। स्वरादित्रितयव्यतिरिक्तस्य निधनमिति कृत्वा नामधेयमिति पूर्वमेवोक्तम्, एतेषां लक्षणानि च प्रदर्शितानि।

ननु साम्नां पूर्वमेवाग्न्यादिदेवताकत्वं व्यवस्थितम्। इतः परमपि सर्वाण्याग्नेयादीनीत्यादिना वक्ष्यते च। किमर्थं वस्त्रादिदेवताकथनमिति तत्राह—

१९। यथा भूयस्त्वेन प्रदेशावर्त्तन्त इत्यन्तराणि।

भूयसोभावो भूयस्त्वम्—सर्वेण इत्यर्थः। तदनतिक्रम्य प्रदेशाः साम्नां वस्त्राद्युपदेशा वर्त्तन्ते, अत उक्ताग्नेयाद्यपेक्षया वस्त्रादिदेवतान्यभ्यन्तराणि, पृथक् पृथक् देवताभिधानात् पूर्वोक्तानां बाह्यत्वम्, इदानीं सद्व्योभिधानादान्तरत्वम्॥

अथोक्तप्रकारेण देवताभिधानेऽपि निगूढतरं साम्नां देवतापरिज्ञानप्रकारमाह—

२०। अथान्तरतराणि सर्वाण्याग्नेयानि सर्वाण्यैन्द्राणि सर्वाणि प्राजापत्यानि सामानीत्यन्तरतराणि।

पूर्वन्तु साम्नां चतुर्धा विभागेन देवताचतुष्टयाभिधानमुक्तम् इह तु सर्वेषामपि साम्नामग्न्यादिदेवताकत्वकथनादन्तरतरत्वम्॥

अथोक्तप्रकारादपि लघुतरं दैवतापरिज्ञानप्रकार-
माह—

२१। अथान्तरतमानि सर्वाणि ब्राह्मणानि सामानीति सर्वान्तरतमानि।

कृत्स्नसाम्नां ब्राह्मणत्वादौ सृष्टेस्तद्देवताख्यानेन तस्यैव प्रतिपाद्यत्वात्सर्वेषां ब्राह्मणत्वम्।

अथ साम्नां देवतासम्बन्धविषये ज्ञातव्यं रहस्यमाह—

२२। अथोपनिषद्।

कैषोपनिषदिति दर्शयति—

२३। ऋग्वै माता साम पिता प्रजापतिः स्वरः।

ऋक् प्रसिद्धा। साम गीत्यात्मकम्। स्वरः क्रुष्टादिः।
(१८) अस्त्वेवं, किं ततः? इत्यत आह—

२४। तद्यान्यृक्त आख्यायन्ते मातृतस्ता-न्याख्यायन्तेऽथ यानि सामत आख्यायन्ते पितृतस्तान्याख्यायन्तेऽथ यानि स्वरत आ-ख्यायन्ते प्रजापतितस्तान्याख्यायन्ते।

ऋक्त आख्यातानि यज्ञायज्ञीय वारवन्तीय प्रभृतीनि। देवानामवयवभूतपदेनाख्यानात्। सामत आख्यातानि यौधाजयप्रभृतीनि। स्वरत आख्यातानि वामदेव्यादीनि। एव

समस्तस्योद्गीथस्योद्गानकर्मणः करणं साम स्वर इति वयो-ऽवयवास्तु पृथक् पृथक् मातादिसम्बन्धेन प्रसिद्धा भवन्ति ।

अथोद्गीथस्योक्तविधत्वं प्रशंसति—

२५ । स वा एषा उद्गीथो बन्धुमान् बन्धु-मत्यः ।

बान्धवा मात्रादय स्तद्वान् । न केवलं बन्धुमत्त्वं किन्तु तेषामन्तर्भूतश्च ।

उक्तार्थज्ञानं प्रशंसति—

२६ । बन्धुमान् बन्धुमत्यो भवति जानन्ति ह वा एनं पितृतश्च य एवं वेद ।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ
प्रकाशे दैवताध्यायाख्ये पञ्चमे ब्राह्मणे
प्रथमः खण्डः ।

पूर्वखण्डे साम्ना बहुधा देवता उक्ताः ॥ अथ तदाश्रय भूतानां छन्दसां देवता अभिधास्यति । इदानीं तेषां वर्णा नभिधातुं प्रतिजानीते—

१ । अथातश्छन्दसां वर्णाः ।

वक्ष्यन्त इति शेषः ॥

अथ गायत्र्यादिभेदेन वर्णविशेषानाह—

२ । शुक्ला गायत्री रूपेण सारङ्गरूप-मुष्णिक्पिशङ्गं ककुभारूपं कृष्णमानष्टुभं

ततः। रोहितं बृहतीनां तु नीलं पाङ्क्तं ततः पुनः सुवर्णं त्रिष्टुभां रूपं गौरं जागत मुच्यते।

सारङ्ग प्रथम'। शेषा स्पष्टाः (१)। एतेषां अक्षर-सङ्ख्या तु "अथ छन्दांसि गायत्र्युष्णिगित्युपक्रम्य चतु-र्विंशत्यक्षरादीनि चतुरुत्तराणि" अनुक्रमण्या मुक्तत्वात् चतुर्विंशत्यक्षरप्रभृति चत्वारि चत्वार्यक्षराधिका उष्णिगा-दिषु द्रष्टव्या. (२)॥

अथातिजगतीप्रभृतीनां वर्णानाह—

३। अतो यान्यन्यानि छन्दांसि श्यावं तेषां ततः पुनः। नकुलन्त्वेकपदानां द्विपदां बभ्रु रुच्यते सारङ्गशुक्लकृष्णरूपाण्यृग्यजुःसा-मब्राह्मान्विताः।

अतो यान्यन्यानि गायत्र्यादिसप्तच्छन्दोभ्यो व्यतिरि-क्तानि अतिजगतीप्रभृतीनि उत्कृतिपर्यन्तानि (२) तेषा श्याव कपिशवर्णं विद्यात्। 'अथेन्द्रो जुषस्वप्रवहेत्याद्येक पदाना नकुल नकुलजाति वर्णं जानीयात्। द्विपदाना-मिमाशुक मित्यादीना बभ्रुवर्णम्। तथा यानि ऋग्यजुरा दिब्राह्मणगतानि गायत्र्यादीनि तेषाञ्च क्रमेण सारङ्गादयो वर्णा द्रष्टव्या।

अथ यज्ञसम्बन्धिनां गायत्र्याद्युपयन्नाना, मन्त्राणां

देवता वक्ष्यामीति प्रतिजानीते—

४। यत्रे यत्रे मयोक्तान्यास्तेषां देवत उच्यते।

अथानुक्ताना विराजा वर्णं दर्शयति—

५। विराजः पृश्नयो विद्यात्।

पिबासोममिन्द्रमन्ददुत्वे त्येवमादवा विराज पृश्नि वर्णा इति जानीयात्।

अथाग्ने गौयत्रग्रादिमन्त्रद्वयस्यवण किमर्थमित्याषङ्के-तत्तात्पर्यमाह—

६। दैवतं तत उत्तरम्।

तत ऊर्द्ध्वात् उत्तर वाक्यजात देवताभिधानमित्यर्थ ॥

अथाग्न्यादीना गायत्र्यादिदेवतात्वसम्बन्धपर मन्त्रद्वयम् तत्र प्रथम मन्त्रमुदाहरति—

७। अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहया सविता सम्बभूव अनुष्टुभा सोमा उक्थैर्मह-स्वान् वृहस्पतेर्भवति वाचमाभवत्।

अग्ने सयुग्वा सहायभूता गायत्री अभवत्। प्रजापतेर्मुखात् देवतासु मध्ये अग्निरजायत। छन्दःसु मध्ये गायत्री च उभावप्य जायेतामित्यर्थ । तथाच तैत्तिरीयक प्रजापतिरकामयत प्रजायेयेति। स मुखतस्त्रिवृ निरमिमीत। तमग्निर्देवताया असृजत गायत्री छन्दस इति॥

वदा। सयुग्वेत्य, त्तरत्र सम्बध्यते। अग्नेः सकाशा- द्गायत्री अजायत इत्यर्थः। तथा उष्णिहया उष्णिक्छ- न्दसा सह, सयुग्वा सह युज्यमाना ककुप् सविता देवः सम्बभूव तस्मात्प्रजापतेर्यज्ञे 'आपश्चापि हलन्तानामिति' (१०) वचनादुष्णिहशब्दादापप्रत्ययः। तथा उक्थैर्मन्त्रैः- महस्वान् तेजस्वी सोमः अनुष्टुभा अनुष्टुप् छन्दसा सार्द्धं तस्मादेव प्रजापते रजायत। तथा बृहस्पतेर्वाच वाक्यं बृहती छन्दः अभवत् अचरत् अगच्छत। बृहत्या सार्द्धं बृहस्पतिरपि तस्मात्प्रजापतेर्यज्ञे ऽजायतेत्यर्थः॥

अथ द्वितीय मन्त्रमुदाहरति—

## ८। विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबेह भागो अह्नः। विश्वान् देवाञ्जगत्या विवेश तेन चाकॢप्र ऋषयो मनुष्याः।

अपि च मित्रावरुणयो र्द्वयोर्विराट् छन्दः अभिश्रीः प्रातराश्रया आसीत्। अथ इन्द्रस्य त्रिष्टुप् छन्द अह्नो भागो माध्यन्दिनसवनाख्ययाभूत्। तथा जगतीच्छन्दः विश्वान् देवान् आ विवेश प्रविष्टा। तेन अग्न्यादिदैवताकेन गा- यत्र्यादिच्छन्द उपनिबद्धेन ऋषयो मनुष्या मरणशीला मानवाश्च चाकॢप्राः चकॢपिरे कॢप्राः दृष्टा आसन्नित्यर्थः। अतो गायत्र्या अग्न्यादिदैवताकेन गायत्र्यादि छन्द इत्युक्तं भवति।

अथोपरितनानां छन्दसां दैवतमाह—

९। प्राजापत्या अतिच्छन्दसो विच्छन्दसो वायुर्देवताः। पुरुषो द्विपदानां दैवतं ब्राह्म एकपदाः स्मृताः।

अतिच्छन्दसः अतिजगत्यतिशक्कर्यादयोऽतिपूर्वाः; विच्छन्दसः शक्कर्याष्टिधृतय। यद्वा। सर्वा एता अतिच्छन्दसः। विच्छन्दसो गायत्र्यादय एवैकद्व्यक्षरन्यूनाधिकभूताः। ताश्च क्रमेण प्रजापतिवायुर्देवताकाः द्विपदा एकपदाश्च यथाभिधानसमये दर्शिताःताश्च क्रमेण पुरुष-ब्रह्म-देवताका.

अथ अनिर्दिष्टायाः पङ्क्तेर्देवतामाह—

१०। यासवी पङ्क्तिः।

यासवी वसुदेवताका ॥

अथ छन्दसामुक्तदेवताकत्वे प्रमाणमुपन्यस्यति—

११। स तु न मन्येतैतद्दैवत्या एवैतेषु छन्दस्त्वृचो भवन्तीति छन्दसां तु हैतद्दैवतमिति।

तु शब्दः प्रदाव्याहृत्यर्थः; स पुरुष न मन्येत, छन्दसामुक्तदेवताकत्वे प्रमाणं नाप्नोति न शङ्केत। यथा एतेषु गायत्र्यादिच्छन्दःसु एतद्दैवत्या एव अग्न्यादिदेवताका एव ऋच. प्रायेण सम्भवन्ति तथा छन्दसां (ष. ष्ठ्यर्थे) अग्न्यादिदेवताक ऋगाश्रयाणामपि।।छन्दसामेतद्दैवतं ह एता अग्न्यादिदेवता भवितु युक्ताः खल्वित्यर्थः।।

इति श्रीदेवताध्यायाख्ये प्रथमे ब्राह्मणे द्वितीयः खण्डः॥

अथ सामाश्रयाणां छन्दसां कथनप्रसङ्गेन तेषामेव निर्वचनं दिदर्शयिषुः सूत्रं प्रतिजानीते—

१। अथातोनिर्वचनम् ।

अथ साम्नां देवताभिधानानन्तरम् अतः यतोनिर्वचनेन निरुक्त गायत्र्यादि छन्दो गायत्रं साम जागतं सामेति सामनामसूपयुज्यते अतो निर्वचनं प्रकृति प्रत्यय विभागेन व्युत्पादनं प्रदर्श्यत इति शेषः॥

तत्र गायत्रीं दर्शयति—

२। गायत्री गायतेः स्तुतिकर्मणः।

गै शब्दे, शब्द स्तवनं, गायति स्तौति प्रकाशयति देवतानिति गायत्री॥

अथ ब्राह्मणप्रदर्शनेनैव प्रकारान्तरेण निर्वचनं दर्शयति—

३। गायतोमुखादुदपतदिति ह ब्राह्मणम्

गायतः वेदजातं शब्दयतः प्रजापतेर्मुखात् एषा वेदसारभूता उदपतत् उदगच्छत् तत अतोपि गायत्रीत्यर्थः॥ अत्रैव गायत्री विद्यायां प्रकारान्तरेण निरुक्तो गायत्री शब्दः। गायन्तं त्रायते पालयति च सा गायत्री। या वै खलु गायति च—"हया ससारे मा क्लिश्यत, तदुच्छित्तये मामेव भजध्वमिति" स्वय शब्दयति च। , तथा कुर्वाण दुःखात्मकात् ससारात् त्रायते पालयति च सा गायत्रीति निरुच्यतइति शेष॥ 'तद्यद्गायएस्तत्रैस्तस्माद्गायत्री नामेति'

हि बृहदारण्यके तथाच श्रुतिनिर्वचनमपि। 'गातारं त्रायते यस्माद्गायत्री तेन सा स्मृतेति'।

अथोष्णिहो निर्वचनं बहुप्रकारं दर्शयति—

**४। उष्णिगुत्स्नानात्, स्निह्यतेर्वा कान्तिकर्मणोऽपि वोष्णीषिणी वेत्यौपमिकम्।**

उत्पूर्वात् 'ष्णा शौचे (अ० प०)—इत्यस्मात् उष्णिक् शब्दः। तदेवाह—उत्स्नानात् उद्भूतस्नानवत्त्वादुष्णिग् वा। यद्वा। स्निह्यतेः 'ष्णिह प्रीतौ (दि० प०)' इति धातु ततः यत् प्रीत्यात्मकं तत् कान्तमपि भवतीति कृत्वा कान्तिकर्मत्वम्। स्निह्यते काम्यते इत्युष्णिगित्यर्थः—कान्त ह्येतद् देवतानां छन्दः। अपि वोष्णीषी उष्णीषवत्येवेत्यौपमिकम्—उपमाप्रयुक्तमभिधानमपेक्ष्योष्णिक् शब्दः तथा ह्येषा गायत्रीतश्चतुर्भिरक्षरैर्वेष्टितेव वर्तते। चतुरक्षराधिक्यादुष्णिकप्रभेदस्य।

अथ ककुभो निर्वचनमाह—

**५ ककुप् ककुद्रूपिणीत्यौपमिकम्।**

ककुप्शब्दोऽप्युपमाप्रधानः—यथा वृषभस्य मध्यप्रदेशे ककुत् सशृङ्ग उच्छ्रितो भवति। एवं मध्यमपादस्य जागतत्वात् चतुरक्षरं ककुत्स्थानीयमस्यास्तीति ककुप्। दकारस्य पकारः। ककुदस्यायं स्थायी लोपः,—इत्यथादसमासेऽप्यकारलोपः।

ककुभशब्दस्य काकुभं दन्तधावनमित्यादौ प्रयोक्तर-

अस्याः स्वाभिमतमर्थमाह—

६। ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वा।

ककुप् कुब्जशब्दौ कुजतेरुब्जतेर्वोत्पन्नौ। कुज कौटिल्य प्रतिष्ठाविशेषयोरेषु। उब्ज आर्जवे—अत्र न्यग्भावार्थः। ततः कौटिल्य न्यग्भावार्थक धातुद्वयार्थस्यात्र सद्भावात् ककुप शब्दः।

अथानुष्टुभो निर्वचनमाह—

७। अनुष्टुबनुस्तोभनात्।

स्तोभतिः हार्थः। गायत्रीतस्सममासरपादहर्षे।

उक्तार्थं ब्राह्मणस्मातिं दर्शयति—

८। अन्वस्तौदिति हि ब्राह्मणम्।

निरुक्ते प्रकारान्तरेण ब्राह्मणवाक्यमुदाहृतम्। 'गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम्'—इति।

अथ, पिपीलिकामध्याया निर्वचन यत्र, पिपीलिका शब्दस्य निर्वचनमाह—

९। पिपीलिका पेलतेर्गतिकर्मणः।

न द्वासौ चयनमप्युदाम्ते।

इदानीं तच्छन्दोनिर्वचनं दर्शयति—

१०। पिपीलिकामध्येत्यौपमिकम्।

पिपीलिका नाम सर्पयत स्थूलो मध्ये कृश इव

ाणिविशेषः तन्मध्यमिव मध्यं यस्याः सा तथोक्ता । मध्यम-
ददलोपी समासः । तस्यास्तनूमध्यत्वमनुक्रम्य "एकाद्यिनो:
रः षट्कस्तृतीयो, मध्ये चेत् पिपीलिकामध्येत्युक्तम् ।

अथ बृहत्या निर्वचनमाह—

११ । बृहती बृंहतेर्वृद्धिकर्मणः ।

अस्या अनुष्टुभः सर्वपादे चैकैकाक्षरवर्द्धनात् भेद्वृहत्वम् ।

अथ विराजो निर्वचनं बहुप्रकारमाह—

१२ । विराड्विरमणाद्विराजनाद्वा ।

विराट् शब्दः "रमु क्रीड़ायां"—"राजृ दीप्तौ"—"राध साध संसिद्धौ"—इति त्रिभ्यो धातुभ्योऽन्यतरेणापि निष्पा-द्यते । धातुत्रयार्थस्य तस्मिन् सम्भवात् ॥

अथ निर्वचनमाह—

१३ । पङ्क्तिः पश्चिनी पञ्चपदा ।

पञ्चसंख्यायोगात् पिङ्क्तिशब्दः, पञ्चत्वप्रदर्शन पञ्च पदेति ॥

अथ त्रिष्टुभोनिर्वचनं दर्शयति—

१४ । त्रिष्टुप् स्तोभ इत्युत्तरपदा ।

स्तोभ इति स्तुतिकर्मोत्तरपदं यस्याः सा त्रिष्टुप्, अस्त्युत्तरपदं पूर्वपदस्य—त्रिशब्दस्य ।

किं प्रवृत्तिनिमित्तमिति स्वयमेव पृष्टोत्तरमपि ब्रूते—

१५ । का तु त्रिता, सा तीर्णतमं छन्दो भवति ।

अस्य त्रिता त्रित्वं का स्यादिति प्रश्नः। अस्योत्तरम्—
तीर्णतमं छन्दोभवतीति। पूर्वभ्यो महत्त्वात्। इष्टांश स
कारो लुप्तः। तीर्णतमं तरतेर्वा पूर्वपदम्। उभयार्थोपप-
त्तिस्तरणात् स्तोभनाच्चेति त्रैष्टुभत्वम्।

त्रिष्टुप्छन्दःपूर्वपदमित्याह—

**१६। त्रिष्टुब्वज्रस्तस्य स्तोभमित्यौपमिकम्।**

उभयत्रिकर्कोटित्वात् वज्रस्त्रिवृत्। तस्य स्तोभमिवे
त्युपमाप्रधानोऽयं निर्देशः। "यत्त्रिवृत्ः स्तोभं त्रिष्टुभ
स्त्रिष्टुप्त्वमिति ब्राह्मणम्।

अथ जगतीच्छन्दो निर्वक्ति—

**१७। जगती गततमं छन्दोजज्जगतिर्भ-
वति क्षिप्र गतिर्जगमगाकुर्वन्नसृजतेति हि
ब्राह्मणम्।**

अतिजगत्यादीनि छन्दसां निर्वक्तुमुपक्रमते—

**१८। अतिच्छन्दांश्छन्देरथे।**

छन्दसोऽर्थे यानीमान्यतिच्छन्दांस्यपि यानि सुगमिति
भावः। तथाच जगतीमतिक्रम्याधिकाक्षरत्वेन या वर्तते
सैवातिजगतीत्येवं कल्पितम्। अथेदानीं छन्दस एव निर्व
चनं वक्ति—

**१९। छन्दांसि छन्दयतीति वा।**

'छन्दसंवरणे (चु० उ०)' छदयति वर्णान्। तथाच

नैरुक्तम्—छन्दांसि छदनात् (दै॰ १, १) इति॥

तत्र गायत्र्यादिषु यथानियम-चतुर्विंशत्याद्यक्षराभावे तासां नामान्तरता माह—

२०। निचृन्निपूर्वस्य,चृतेः।

एकाक्षरन्यूनासु गायत्र्यादिषु निचृदिति। चर्चयति सन्दीपयति ऋग्गतभावानिति चृत् छन्दः. निकृष्ट मेकाक्षरेण हीनं निचृत्। तथाच पिङ्गलः—"ऊनाधिकेनैकेन निचृद्भुरिजौ (३ ५९) इति।

तथा एकाक्षराधिक्ये सञ्ज्ञान्तरमाह।

२१। भरणाद्भुरिज उच्यते।

एकाक्षरेण भरणाद् चतुर्विंशत्यात्मगायत्र्यादाविति शेषः। अथो सामसु गायत्रस्य प्रशस्ततया तद्देशत्रोपसंहारे स्तौति

२२। अथातोगायत्रमाग्नेयं भक्त्या भवति देवानां वर्षीणां वा परमेष्ठिनो वा प्राजापत्यस्य साम।

अथेत्यानन्तर्यवचनः अत इत्यधिकारार्थः। आग्नेयम् अग्निदैवतम्, यद् गायत्रं नाम साम, तद्धि देवाना वा ऋषीणां वा परमेष्ठिनः प्राजापत्यस्य वा सर्वस्यैवेत्यर्थः 'भक्त्या' सम्भजनेन भवति भवेत्॥

गायत्र-साम्नः किं मूल मित्याह—

२३। सावित्री गेयम्।

सावित्रि नामर्चि तत्सवितुर्वरेण्यमित्यत्रैव गेयम् प्रशस्तमि सदन्तु अन्यत्रापि गेयमूहतः

ननु गानग्रन्थेषु कथं तत्रोपलभ्यतइत्याह—

२४। यत्रागीतम्।

यत्र सावित्रिनामर्चि गानग्रन्थादौ प्रगीतम् तत्रैव गानम् प्रशस्तमित्यर्थः।

किन्तदिति स्वरूपं दर्शयति—

२५। तत्सवितुर्वरेण्योम्। भार्गोदेवस्य धीमा ह्यो२। धियोयोनः प्र। चो १ऽ२१ऽ २ हुम्। आ२ दायो आ ३४५।

सावित्रगानस्यैतत्स्वरूपस्य छन्दआर्चिकस्य पञ्चप्रपाठकीय-तृतीयार्द्धे श्रुतस्य दशमसूक्तस्य प्रथमपाठतो ज्ञेयः। व्याख्यातथापि तत्रैवेति॥

॥ इति तृतीयः खण्डः ॥

॥ समाप्तञ्च दैवत ब्राह्मणम् ॥

# षड्विंशब्राह्मणम् ।

ओं नमः सामवेदाय ।

ओं ब्रह्म च वा इदमग्रे सुब्रह्म चास्तां तत्र सुब्रह्मो-ऽस्मादृयष्ट देवा यज्ञेन ब्रह्म पर्यगृह्णंतानिवें ब्रह्मा साया-देत्य. सुब्रह्म तद्देवा यज्ञस्य सम्यावन्वेच्छन्तेय वै यज्ञस्य नियिर्वैव उत्करस्तस्मादुत्करे तिष्ठन्सुब्रह्मण्य सुब्रह्मण्या माह्वयति सुब्रह्मण्यो ३एसुब्रह्मण्योश्ए सुब्रह्मण्योश मिति त्रिय मिव विराड् वियया (त्या) हि देवा इन्द्रागच्छेति यन्त्रेन्द्रागच्छेत्येतद्वा अस्य प्रत्यक्ष नाम तेनैवैनं तद्वा ह्व यति हरिव आगच्छेति पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्याएंह्नीदएसर्व हरति मेधातिथेर्मेषेति मेधातिथि ह काण्वायनएंमेषोभूत्वा जहार वृषणश्वस्य मेन इति वृष णश्वस्य ह मेनस्य मेनका नाम दुहिता स ताएं हैन्द्रयकमे गौरावस्कन्दिन्निति गौरमृगो ह स्म भूत्वावस्कधारण्या द्राजानं पिबत्यहल्यायै जारेत्यहल्याया ह मैत्रेया जार आस कौशिकब्राह्मणेति कौशिको ह स्मैनां ब्राह्मण उप-ह्व्येति गौतमब्रुवाणेति देवासुरा ह संयत्ता (त्ता) आसएं स्तानन्तरेण गौतम श्रशाम तमिन्द्र उपेत्योवाचेह नो भर्जस्व ( च्छ ) सचरत्विति नाहमुवाह इत्यथाह भवतो रूपेण चरामीति यथा मन्यस इति स यत्तद्गौतमो वा

ब्रुवाणश्चचार गौतमरूपेण वा तद्देतदाह गौतमेतीन्द्र हि सुत्यामागच्छ मघवन्निति तद्यथाहैतो ब्रूयादित्यहे व. पक्षास्मि तदा गच्छातेत्येवमेवै तद्देवेभ्यः सुत्या प्राह देवा ब्राह्मण इति देवाहैव देवा अथ हैते मनुष्यदेवा ये ब्राह्मणाः शुश्रुवाꣳसोनूचानास्ते मनुष्यदेवा आहुतय एव देवाना द- चिणा मनुष्यदेवाना माहुतिभिर्हि देवान् प्रीणाति दचि- णाभिर्मनुष्यदेवाञ्छुश्रुवषोनूचानान् ब्राह्मणान् प्रीणाति ॥१॥

इति षड्विंशब्राह्मणे प्रथम-प्रपाठके

प्रथमखण्डः ।

अथ यत् सुब्रह्मण्य' सुब्रह्मण्यामाह्वयन्ते तस्मिन् ह का- लेऽसुररचाꣳसि देवानां यज्ञमजिघाꣳसकास्ते देवा निश्चय मवा कुर्वत ब्रह्मोꣳ३ सुब्रह्मोꣳमिति तानादित्य. पर्जन्य पुरो बलाको भूत्वाऽभि प्रैत्तान् तद्याऽगन्या विद्युताꣳदꣳस्तदाह. न्द्रो सुब्रह्मण्या ३ऽऽ पुमा ३ऽऽऽनपुꣳसका ३ऽऽऽमिति सर्व- मेवेति ब्रूयात् यत्पर्जन्य. पुरो बलाको भूत्वाऽभिप्रैत्तेन पुमान् यदयृत्या यदगन्या तेन स्त्री यद्विद्युता तेन नपुꣳ सक तस्मात् सर्वमेवेति ब्रूयात्तदाहु र्कमब्रह्मण्या३ऽऽऽ यजूः ऽऽऽऽम्नामा३ऽऽऽ इति सर्वमेवेति ब्रूया इच इवास्या नामधेयꣳसुब्रह्मण्येति तस्मा इह्मन्त एव खल्वस्य निगद भूतो भवति तस्माद् यत्र मामकारिण कुर्वन्ति यथान्यैः मामभिम्नस्मात् माम तस्मात् सर्वमेवेति ब्रूयात्तदा यतत् सुब्रह्मण्यामाह्रय यजमानं वाचयति मामि सुब्रह्मण्ये तस्यास्ते पृथिवी पाद इत्याह यान्येव पृथिव्याममुरर चाꣳसि तान्येव तेनापहते मामि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्ष

पाद इत्याह यान्येवान्तरिक्षेऽसुररक्षाꣳसि तान्येव तेनाप हते सामि सुब्रह्मण्ये तस्मात्ते द्यौः पाद इत्याह यान्येव दिव्यसुररक्षाꣳसि तान्येव तेनापहन्ति सामि सुब्रह्मण्ये तस्मात्ते दिशः पाद इत्याह यान्येव दिक्ष्वसुररक्षाꣳसि तान्येव तेनापहन्ति परो रजास्ते पञ्चमः पाद इत्याह परोरजसो वै ब्रह्मणः स्थान तदेतदाह सा न इषमूर्जं धुक्ष्वेत्याहेषमेवास्मा ऊर्जं दुग्धे वीर्यमन्नाद्यं धेहीत्याह वीर्यमेवास्मा अन्नाद्यं दधाति ब्रह्मणो वै नामैतन्नाम यत् सुब्रह्मण्या तस्मात् प्रातरनुवाक उपाकृते विसꣳस्थिते च यज्ञे सुब्रह्मण्यः सुब्रह्मण्यामाह्वयत्येष वै यज्ञ सब्रह्म चाप्नोति य एतदनो युक्तं सुब्रह्मण्याय ददाति ब्रह्मणा चैवास्य श्रिया च यज्ञं समर्धयति य एव वेदार्थो यस्त्वाहुर्यज्ञावगत यज्ञानवगतꣳ सर्वस्यैव प्रायश्चित्तिरिति तस्मादेव विद सुब्रह्मण्यं कुर्वीत नानेवं विदम् । १ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके

द्वितीयखण्डः ।

एकच्छन्दः प्रातः सवनं तस्मादेकपात् पुरुषो हस्तान्यं प्रत्यन्येन तिष्ठति त्रिच्छन्दा माध्यन्दिन पवमान स्तस्मात् त्रयोऽधः प्राणा द्वे गायत्र्याꣳसामनी तस्माद्द्वय मधरेण प्राणेन करोति द्वे बृहत्यां तस्माद्द्वयमुत्तरेणैक त्रिष्टुभि साम तस्मादेकैव नाभिः प्राणानामिव तु विष्टति रथ यदेव तत ऊर्ध्वं तानि पृष्ठानि बार्हतान्येकगायत्रीकाणि तस्माद्बृहत्य एव परिशयो बृहत्य एव कीकसाः पृष्ठमभिसमायन्त्यथ यदेव तत ऊर्ध्वं स आर्भवः पवमानः

प्राणो गायत्री श्रोत्रे उष्णिक्ककुभौ वागनुष्टुप्चक्षुर्जगती
पुष्टिर्यदन्यद् गायत्र्याः सामनी तस्मादयं प्राणेन करोति
प्राणिति चापानिति चैकं छन्दः ककुबुष्णिहौ द्वे सामनी
तस्मात् समानं सच्छ्रोत्रं द्वे धेव शृणोति द्वे अनुष्टुभि सामनी
तस्मादयं वाचा करोति सत्यं चानृतं च वदत्येकं जगत्यां
साम तस्मा द्वे अक्षिणी सती समानं पश्यतो न हि पश्या
द्रायन्त पश्यत्यथ यदेव तत ऊर्ध्वं मूर्द्धा तदाग्रायणीयं
मूर्द्धा स्वानां भवति य एव वेदाथ इव वा अन्यान्यङ्गानुर-
परीव मूर्द्धा इवास्मा अन्ये स्वा भवन्त्युपरीव स्वानां भ-
वति य एव वेद यज्ञो वा अथ यज्ञ इत्याहुरेष वावजात
एषोऽयवलुप्तजरायुरेष आर्लिञ्जीनो य एत वेदमनुब्रूते यदा
वा एत वेदमनुब्रूतेऽथैनं मृगवन्त्यमावन्त्वोचतेति तद्वै स
जायत ऊनाक्षरा गायत्री प्रातः सवने प्रजानां प्रजात्या
ऊनादिव हि प्रजा प्रजायन्त ऊनाक्षरा गायत्री
पृष्ठेषु वामदेव्ये यजमानं लोक एव स मध्ये
हि यज्ञस्य यजमान ऊनाक्षरा गायत्री सन्धिते प्राणापा-
नयो रुचार ऊनादिव हि प्राणापानावुच्चरत ऊनाक्षर यु-
ज्ञायज्ञीय प्राणानामुत्सृष्ट्यै यो हि पूर्णमुपधमेद् यदि
प्रतीयाद् विपतेद् यदि न प्रतीयाद् विष्यन्देत तदाहुः सव-
नानाञ्च वा एत उद्दाना प्राणानाञ्चोत्सृष्टिरिति ॥ ३ ॥

इति षड्विंशब्राह्मणे प्रथमप्रपाठके

तृतीयखण्डः ।

अध्वर्यो यिल्पाहोतारा मास्म मे निवेद्य होतै प्रातरनु-
वाकमुपाकरो रिति सोऽन्वहु प्राह स इतो व्रजति स पु

यथा द्वारा हविर्धाने प्रपद्यते स दक्षिणस्य हविर्धानस्योत्तरं चक्रमभ्यपश्रयमाण उदङ्ङासीनो विश्वरूपा गायति यत्र वै स्तोत्रं विट्शस्त्र यत्रैणैवास्मै वियमनुवीर्यं मनुवर्मान करोत्यथो भुतग्रस्तथो रेव समारभ्याध्यवस्यं साय सन्तत्या एतस्माद्द ग्रावो मैवेय: प्राह्नेवा श्यादा पापवसीयस व्याकरिष्यामीति सह स्म सदस्यैवोपवसथ्येऽह्न्युदङ्ङासीनो विश्वरूपा गायति तदुपवादोऽप्यभ्ययौ किं स्तुतं स्तोत्र होता प्रातरनुवाकेनान्वशंसीदिति स ब्रूयादकारिष महल्लद् यन्मम कर्म होतारं पृच्छतेति होत: । कि स्तुत स्तोत्र प्रातरनुवाकेनान्वशसीरिति स ब्रूयादकारिष महल्लद् यमम कर्मोद्गातार पृच्छतेत्युद्गात: । किं स्तुत स्तोत्रं होता प्रातरनुवाकेनान्वशसीरिति स ब्रूयादकारिप महल्लद् यमम कर्म गासिप यद्गेयमिति तं चेद्ब्रूयुस्मा वै त्वमगासोर्ज्योतिरिति स ब्रूया ज्योतिस्तेन येन ज्योति ज्योतिस्तेन येनर्ग् ज्योतिस्तेन येन गायत्री ज्योतिस्तेन येन छन्दो ज्योतिस्तेन येन साम ज्योतिस्तेन येन देवता ज्योतिरेवाह मगासिषं न तमो युष्मांस्तु पाप्मना तमसा विध्यानीत्याह पाप्मनैवैनांस्तत्तमसा विध्यति युञ्जे वाच शतपदीमित्याह वाग्वा शतपदी वाक् शतपदी शतसनिमेव तदात्मानश्च यजमानश्च करोति गाये सहस्रवर्तनीति साम वै सहस्रवर्तनि सहस्रसनिमेव तदात्मानश्च यजमानश्च करोति गायत्र त्रैष्टुभ जगदिति गायत्र वै प्रात: सवन त्रैष्टुभं माध्यन्दिन सवन जागतं तृतीयसवनं सवनान्येवैतद् यथा स्थान यथा रूप कल्पयति

विश्वारूपाणि सम्भृतेति विश्वमेव तद्वित्तमात्मने च यज मानाय च सम्भरति देवा श्रोकासि चक्रिर इत्योकोहास्मिन् यत्र कुरुते य एव वेदाशि तम्हगाह स्मवै पुरा काश्यपा उन्नायन्त्यथह युवानमनूचान कुसुरुबिन्दमौद्दालकिं ब्राह्मण उद्गीथाय वव्रे ते होचु परि वै नीयमालिं न्यमाद्त्ते इन्तेममनुव्याहरामेति त हानुव्याहरिष्यन्त उपनिषेदु स होवाच ब्राह्मणा नमोवोस्तु प्राक्षे वा अह यत्र समस्थापयन्त्यथा तु वै ग्रामस्य यातस्य शीर्ष वा भग्न वानुसमाघद्दे देव वा अह यत्रस्यातोऽधिकरिष्यामीति ते इचिह्वयोत्तस्थु क इदमस्मा अवोचदिति ॥ ४ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके चतुर्थखण्ड प्रथमाध्याय ।

इन्द्रो ह वै विश्वामित्रायोक्थमुवाच वसिष्ठाय ब्रह्म वा उक्थमित्येव विश्वामित्राय मनो ब्रह्म वसिष्ठाय तद्वा एतदाभिष्ठ ब्रह्मापि हैव विट वा वासिष्ठ वा ब्रह्माण कुर्व्वीत तद्यथो भयवर्त्तनिना रथेन या या दिश प्रार्थयते ता तामभिप्राप्नोत्येव मेतेनोभयवर्त्तनिना यज्ञेन य काम कामयते तमभ्यश्नुतेऽथाहैभाम्बै मन प्राणाना स यद्व्याहरति वाचि तन्मन प्रतिष्ठापयति तद्यथैकवर्त्तनिना रथेन न काञ्चन दिश व्यश्नुते तादृगेतद् यावद् ऋचा यजुषा साम्ना कुर्य्यात्तावद् ब्रह्मा वाच यमो बुभूषेत् प्रजापतिर्वा इमाँ स्त्रीन्वेदानसृजत स एत स्रष्टानाधिम्बैस्तान्भ्यपीडयत्तेभ्यो भूर्भुव स्वरित्यक्षरद् भूरित्यृग्भ्यो क्षरत् सोऽय लोकोभवद् भुवरिति यजुर्भ्यो क्षरत् सोऽन्तरि-

द्युलोको भवत् स्वरिति सामभ्योऽक्षरत् स. स्वर्गोलोको भवत्तद्यत्यक्ष उल्वणं क्रियेत गार्हपत्यं परेत्य भू. स्वाहेति जुहुया दय वै लोको गार्हपत्योऽय लोक ऋग्वेदस्तद्दा इमश्च लोक ऋग्वेदञ्च स्वेन रसेन समर्द्धयत्यथ यदि यजुष्ट उल्वण क्रियेताऽन्वाहार्यपचन परेत्य भुवः स्वाहेति जुहुया दन्तरिक्षलोको वा अन्वाहार्य-पचनोऽन्तरिक्षलोको यजुर्वेदस्तद्दा अन्तरिक्षलोकञ्च यजुर्वेदञ्च स्वेन रसेन समर्द्धयत्यथ यदि सामत उल्वणं क्रियेता हवनीय परेत्य स्व स्वाहेति जुहुयात् स्वर्गो वै लोक आहवनीय. स्वर्गो लोक. सामवेद-स्तद्वै स्वर्गं च लोकं सामवेदञ्च स्वेन रसेन समर्द्धयत्यतो यावयतमस्मिन्देव कतमस्मिं योल्वण क्रियेत सर्वेष्वेवा-नुपर्याय जुहुयात्तथा ह्यस्य यज्ञो स्वतः स्वर्गस्ततो भव त्यथस्त्वमा ह्यभिवाहा वेधा यज्ञ उत्क्रामति देवान् दिवं तृतीयमन्तरिक्षं मनुष्यां स्तृतीय पृथिवी पितॄं स्तृयीयं तदभिमृशेद् देवान् दिव यज्ञो गात्ततो मा द्रविणमष्टन्तरिक्षं मनुष्यान्यज्ञो गात्ततो मा द्रविणमष्टु पृथिवी पितॄन् यज्ञो गात्ततो मा द्रविणमष्ट् यत्र क्व च यज्ञो गात्ततो मा द्रविणमष्टिति तद्दा आत्मानञ्च यज-मानञ्च स्वेन रसेन समर्द्धयति वरुणो या एतद्दिष्णो यज्ञ-मुपार्पयति यद्यज्ञ उल्वण क्रियते तदप उपनिनयेद्यो रोजसा स्कभिता रजांसि वीर्येभि र्वीरतमा शविष्ठाया पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणापूर्वहूतो स्वाहेति तद्दा आत्मानञ्च यजमान च स्वेन रसेन समर्द्धयति ॥५॥

इति षड्विंशब्राह्मणे प्रथम-प्रपाठके पञ्चमखण्डः ।

ये विराजमतियजन्ते विराजमेव त ईप्सन्तोऽमुष्मिं लोके
श्राम्यन्त्यथ य एनामर्वाग्दभ्नुवन्ति विराजमेव त ईप्सन्तो-
ऽमुष्मिं लोके श्राम्यन्ति तेषां तथा श्राम्यतां सुकृत क्षी-
यते न हि तदमुष्मिं लोके शक्नुवन्ति यदस्माल्लोका दकृत्वा
प्रयन्त्येतद्ध स्माहोद्दालक आरुणि कथन्ते यजेरन् कथ वा
याजयेयुर्यं यज्ञस्य छन्देन न नन्दन्ति नन्दन्ति यत् समृद्धे-
नेत्यह वा य काले यजे याह काले याजयेय योऽह यज्ञस्य
छन्देन नन्दामि नन्दामि यथासमृद्धेनेत्यपि ह स्मादेव का-
माद् यज्ञस्य व्यर्द्धयति भूयसे रूपाय कृपा ऽऽसरामि भिष
क्षत्वेत्येतद्ध स्म वै तद्विद्वानाह यावद्वा ऋचा होता क-
रोति होतर्येव तावद्यज्ञो यावद्यजुषाऽध्वर्युरध्वर्य्येव ता
वद् यावत्साम्नोद्गातोद्गातर्य्येव तावद् ब्रह्मण्येव तावद्यज्ञो
यत्नोपरतास्तस्मात्तस्मिन्नन्तर्द्धौ ब्रह्मा वाचयमो बुभूषेत् स
यदि प्रमत्तो व्याहरेदेता वा व्याहृतीर्मनसानुद्रवेद्भ-
र्भुव स्वरिति वैष्णवीं वर्च्चमिद विष्णुर्विचक्रम इति
रामो ह मितस्य मर्कटोंऽशूनादाय प्रच माप्रुवे स हा-
रुणि राइतिमुद्यत्योवाच पुनर्वैनान्निवपास्यतो वावमृतो
यपसत्रस इति स होवाच किं होष्यसीति प्रायश्चित्त
मिति किं प्रायश्चित्तमिति सर्वप्रायश्चित्तमिति किं सर्व
प्रायश्चित्तमिति महाव्याहृती रेव मघयन्निति सहोवाचा-
मारुणी यदाहुति मनूचिषे काय नु विद्वाश्वकाथमर्कटों
शूनादत्तेति स होवाच यज्ञावगत यज्ञानवगतं सर्वस्मे
पैव प्रायश्चित्तिरिति तस्मा देतामेव जुहुयादपि वा ज्ञात
यदनाज्ञात यज्ञस्य क्रियते मिथ्यर्न तदस्य कल्पयतां

हि वैश्व यथा यथं स्वाहेत्यपि वा प्राजापत्यां प्राजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहेति तदा आत्मानं यजमानस्य स्वेन रसेन समर्द्धयत्यथ यद्दै किं च यज्ञे मृण्मयं भिद्येत तदभिमृश्येद्भूमिर्भूमिमगान्माता मातरमप्यगाद्भूयास्म पुत्रै पशुभिर्यो नो द्वेष्टि स भिद्यतामिति तदा आत्मानस्य यजमानस्य स्वेन रसेन समर्द्धयति ॥ ६ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके षष्ठखण्ड ।

ग्लायतीव वा एतत् सोमं राजानं प्रेवमीयते यदेन मभिषुण्वन्ति तस्यैतामनुसारणीं कुर्वन्ति यत्सौम्यं चरु-न्तस्मात् पुरुषाय पुरुषायानुस्तरणी क्रियते साध्याना वै देवानां सत्रमासीनानां शर्करा अक्षसु जज्ञिरे ते हेन्द्र मुपनिषेदु कथं नु तेषां शर्करा अक्षसु जायेरन यां स्त्व विद्या इति तेभ्य एतत्सौम्यं चरीश्रायमाज्य प्राय च्छत्तदवैक्षन्त ते प्रापश्यन् प्रपश्यत्यनन्धो भवति य एव विद्वांत्सौम्य चरुमवेक्षते योऽलमन्नाद्याय सन्नथान्नाद्याद् दक्षिणार्द्धं सदसो गत्वैतं सौम्यातिषेष प्राश्नीयाज्जन वा एतस्मादस्माद्व क्रामति योऽलमन्नाद्याय सन्नथान्नत्ति जनो अस्मात् पितरो जन्यै नैवान्ये नाशमत्यन्नादो भवति ॥७॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके सप्तमखण्ड ।

## इति प्रथमः प्रपाठकः ।

ओम् । प्रजापति रकामयत बहु स्यां प्रजायेयेति स

एताᳬ रेतस्यामृचᳬ साम्ना प्रच्छन्नामगायद् यद्दचमसाम्नी मगास्य दस्थ्यमाᳬ समजनिष्यत यत्सामामृचं माᳬस मनस्विकामजनिष्यतच्चᳬसाम्ना प्रच्छन्नां गायति तस्मात् पुरुषः प्रच्छन्नो माᳬसेन त्वचा लोम्ना जायते विकहूलाति त्रय इमे लोका एषां लोकानामवरुध्यै विभ्यष रेतः सिच्यते न हिं कुर्याद् वज्रो वै हिङ्कारो बलमिव रेतो यद्धिङ्कुर्याद् वज्रेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्यात्रैतस्या छन्दसा प्राजापत्या देवतया सर्वमितया ध्यायन् गायेत् सर्वᳬह्येदᳬरेतो द्वितीया गायति तस्या द्वे अक्षरे सम्यतो व्यतिषजति मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमं व्यतिषक्तौ प्राणापानौ प्रजा दधतो गायत्रीच्छन्दसाऽऽग्नेय्यो देवतया पृथिवीमितया ध्यायन् गायेत् तृतीयां गायति तां बलवदिवोग्रमेव गायति तस्या द्वे उत्तरार्द्धेऽक्षरे द्योतयति चक्षुरेव तद्युनक्ति तस्माद्युक्तं चक्षुस्त्रिष्टुप्छन्दसैन्द्री देवतयान्तरिक्षमितया ध्यायन् गायेच्चतुर्थीं गायति तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायत्या द्वादशभ्योऽक्षरेभ्यो द्वादशाक्षरपदा जगती पशवो वै जगती पशुष्वेव प्रति तिष्ठति तस्याश्चत्वार्युत्तमार्द्धेऽक्षराणि द्योतयति श्रोत्रमेव तद्युनक्ति तस्माद्युक्तᳬश्रोत्रᳬश्रोत्रे द्वे प्रति श्रवणे द्वे तस्मात् पुरुषः सर्वा दिश शृणोत्यपि पराङ्सन् प्रत्यन्यᳬशृणोति जगतीच्छन्दसा सौरीदेवतया दिवमितया ध्यायन् गायेत् पञ्चमीं गायति तान्निनर्दन्निव गायत्याच्छ बहुतमात् पुरुषादश्मत्यनार्द्धो भवति य एवं वेद निरुक्तां चानिरुक्तांश्च गायति निरुक्तेन वै वाचो भुङ्क्ते निरुक्ता-

मन्या उपजीवन्ति भुङ्क्ते वाचमुपैनां जीवति य एवं वेदानुष्टुप्छन्दसा प्राजापत्या देवतया सर्वमेतया ध्यायन् गायेत् सर्वᳩहोद प्रजापत्यᳩपष्ठो गायति तस्या द्वे द्वे अक्षरे उदासं गायत्या षड्भ्योऽक्षरेभ्यः षड्तव ऋतु ष्वेव प्रति तिष्ठति पङ्क्ति छन्दसा सौमीदेवतया दिश एतया ध्यायन् गाये द्विहैव च वा एष इहैव च मनसा गच्छति यो गायते प्रातःसवने त्रिष्टुभङ्गायति जगतीं गायत्यनुष्टुभङ्गायति पङ्क्तिं गायत्यास्ते गायत्रं हि गायति प्राणमेव तदभ्येति प्राणो हि गायत्रं पन्यानमेव तदभ्येति पन्था हि गायत्रᳩरथन्तरवर्णामुत्तमां गायति यं वै रथन्तरमस्यामेव प्रति तिष्ठति ॥ १ ॥

इति षड्विंशब्राह्मणे द्वितीय प्रपाठके प्रथमखण्डः।

ता वा एता देवलोकाय युज्यन्ते यत्पराच्यः प्रतीच्यो मनुष्यलोकायैष वाव जात एषो वत्स जरायुरेव आर्लिंजीनो यस्य धुरो गीयन्ते यथैवं विद्वान्स्रो गायति जातमेवैनमन्वाधाय परि हृणत्युभावन्नमत्त उद्गाता च यजमानश्च या प्रथमा तामन्नाद्यं ध्यायन् गायेद्रेतस एव तत्सिक्तायात्राद्य प्रतिदधाति न हि कुर्याद्विदुर्याद् वर्मेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्या द्रेतस्याकन्दी युज्यते मनो धीयते या द्वितीया ता गायत्रीभागाङ्गायेᳩ स्तस्या द्वे अक्षरे सगयन्ती व्यतिपजति मध्यमस्य च पट्स्योत्तमस्योत्तमस्य च प्रथमं व्यतिपक्तौ प्राणापानौ प्रजा दधतौ गायत्रोच्छन्दो युज्यते प्राणापानौ धीयेते या तृतीया तां त्रिष्टुभभागां गायेᳩस्तस्या द्वे उत्तमार्द्धेऽक्षरे

द्योतयति चक्षुरेव तद्युनक्ति तस्माद् विरूपश्चक्षुः कृष्ण-
मन्यच्छुक्लमन्यत् त्रिष्टुप्छन्दो युज्यते चक्षुषी धीयेते या
चतुर्थी तां जगतीमागाङ्गायएँस्तस्याश्चत्वार्युत्तमाक्षराणि
द्योतयति श्रोत्रमेव तद्युनक्ति तस्माद्युक्तएँ श्रोत्रएँ श्रोत्रे
द्वे प्रतिश्रवणे द्वे तस्मादपि पराङ्सन् प्रत्यङ् शृणोति
जगतीच्छन्दो युज्यते श्रोत्रे धीयेते या पञ्चमी तामनुष्टु-
भमागां गायएँश्चतुर्दा व्याहृत्य गायेच्चतुर्दा वा इदं पुरुषो
वीर्याय विकृतो जायते वीर्यायैवैनत्सदाहृत्य गायत्युच्चाव-
चामिव गायेदुच्चावचेव हि वाक् सङ्ख्यात्येव गायेत् स-
ङ्ख्यात्येव हि वाच पुरुषो वदत्यनुष्टुप्छन्दो युज्यते वाग्
धीयते या षष्ठी तां पङ्क्तिमागाङ्गायएँस्तस्या द्वे द्वे
अक्षरे उदासङ्गायत्यापङ्भ्योऽक्षरेभ्यः षड्ऋतव ऋतुष्वेव
प्रति तिष्ठति पङ्क्तिच्छन्दो युज्यते समानोदानौ धीयेते
सदिति प्रथमाया धुरो निधनएँरेतसो ह्यधि सञ्जायते
समिति द्वितीयाया रेतसो ह्यधि सम्भव स्वरिति तृती-
याया प्रस्वर्गं लोकं जानातीडेति चतुर्थ्याः पशवो वा इडा
पशुष्वेव प्रति तिष्ठति वागिति पञ्चम्याः सर्वा अस्मिन्
पुरुषा वाचो वदन्ति य एवं वेद या प्रथमा तां गाय
च्छ्रियमिव गायेदायत इव ह्ययं प्राङ्प्राणो या द्वितीया
तां घोषिणीमिव गायेद् घोषीव ह्ययमपानो या तृतीया
तामुदच्छ्रमिव गायेदुद्युत इव ह्ययं प्राणो या चतुर्थी
तान्विक्रीडयन्निव गायेद्विक्रीडित इव ह्ययं व्यानो या पञ्चमी
तान्विरक्तानि पदानीव गायेद्विरक्तानि पदा इव ह्ययएँ
समानो या षष्ठी तामुदात्तमिव गायेदुदात्त इव ह्यय

मुदानो यच्छृत्वा८ रथन्तरवर्णमुत्तमाङ्गाद्धि दिव वै रथन्तर मस्यामेव प्रतितिष्ठति ॥ २ ॥

इति षड्‌विंशब्राह्मणे द्वितीय प्रपाठके द्वितीयखण्डः ।

देवाश्च वा असुराश्चेषु लोकेष्वस्पर्धन्त ते देवाः प्रजापति-मुपधावएस्तेभ्य एतान्धुर प्राणान् प्रायच्छन्मनः प्रथममथ प्राणमथ चक्षुरथ श्रोत्रमथ वाच ताभ्यः पञ्चभ्यो धूर्भ्यः पुरुषञ्च पशूएश्च निरमिमीत तेन पुरुषेणासुरानधूर्वन् यद्धूर्वएस्तद्धुरां धूस्त्व धूर्वति पाप्मान भ्रातृव्यं य एव वेद यो वै धुरां धूस्त्वं वेद धुरा धुरा भ्रातृव्याद्वसीयान् भवत्येतद्वै धुरां धूस्त्व यं नाना वीर्या नाना रूपा नाना छन्दस्या नाना देवत्याः समानएहिंकार मभि सम्पद्यन्त एतद्वै धुरा धूस्त्वं धुर्वति पाप्मानं भ्रातृव्यं य एवं वेद यो वै धूर्षु महाव्रत वेद सर्वा अस्मिन् पुण्या वाचो वदन्ति शिरो गायत्र्यरस्त्रिष्टुब्मध्यं जगती पादा अनुष्टुप्सर्वा अस्मिन् पुण्या वाचो वदन्ति य एव वेद यो वा एव धुरो विद्वानयासां व्रत परलोकमियतोऽस्य पूर्वेद्युः पुण्या कीर्त्ति रागच्छति सुरभिरेव गन्धो गायत्र्या व्रतं दर्शनीय त्रिष्टुभः श्रवणीय जगत्या यदेव वाचा पुण्यं वदति तदनुष्टुभ स्तद् सर्वासां व्रत तद् विद्वाए स माद्य इति नो यादी रिति तदनाहत्य यस्य वै धुरो विगीतास्तस्य सङ्गीता यस्य वा एता अविष्यमाने विगीयान्तरात्र्येषु सङ्गायन्ति तस्य वै धुरो विगीता स्तस्य सङ्गीता यः कामयेतैकधा यजमानं यश ऋच्छेद्यथादिष्टं प्रजाः स्युरिति होतुराज्ये गायेद्देकधा यजमान यश ऋच्छेद यथादिष्टं

ह्वयस्वेत्युच्चैः प्राणो मे होतासदसि स नोपह्वयतां होता सदसि उपमाह्वयध्वमित्युच्चैः प्राणो मे चमसा-ऽध्वर्युः स मोपमाह्वयतां चमसाध्वर्यव उपमाह्वयध्वमित्युच्चैः स्ताया एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपहूतो भवति प्राणो यजमानोऽग्नो यत्रैतासां देवतानां लोकं स्तदुपहूतो भवति ॥ ५ ॥

इति षड्विंशब्राह्मणे द्वितीय-प्रपाठके पञ्चमखण्डः ।

स माध्यन्दिने सवने सवनमुखीयेष्वाहुतिपूर्वमि-च्छति वाङ्मे होता स मोपह्वयतां होत रुपमाह्वयस्वे-त्युच्चैश्चक्षुर्मेऽध्वर्युः स मोपह्वयता मध्वर्य उपह्वयस्वेत्युच्चैः श्रोत्रं म उद्गाता स मोपह्वयतामुद्गातरुपमाह्वयस्वेत्युच्चैर्यो-ऽयमन्तश्चक्षुषाकाशः स मे सदस्यः स मोपह्वयतां सदस्यो-पमाह्वयस्वेत्युच्चैर्या इमा अन्तश्चक्षुषापस्ता मे होत्रास-दसि स्ति मोपह्वयतां होत्रासदसि उपमाह्वयध्व मि-त्युच्चैः अङ्गानि मे चमसाऽध्वर्यवस्ते मोपह्वयन्तां चमसा-ध्वर्यव उपमाह्वयध्व मित्युच्चैः स्ता वा एता देवता ऋ-त्विजा मेव वाग्भि रुपह्वयन्ते स उपहूतो भवत्यपानो यजमानोऽग्नो यत्रैतासां देवतानां लोकं स्तदुपहूतो भवति ॥ ६ ॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके षष्ठखण्डः ।

स तृतीयसवने सवनमुखीयेष्वाहुतिपूर्वम् इच्छति प्राणो मे होता स मोपह्वयतां होत रुपमाह्वय स्वेत्युच्चैः अपानो मेऽध्वर्युः स मोपह्वयता मध्वर्य उपमाह्वयस्वेत्युच्चैः व्यानो मे ब्रह्मा स मोपह्वयतां ब्रह्मन्नुपमाह्वयस्वेत्युच्चैः

समानो म उद्गाता स मोपह्वयता मुद्गात रुपमाह्वयस्वेत्युश्चै र्योयमन्तः पुरुष आकाशः स मे सदस्य. स मोपह्वयताᳪ सदस्योपमाह्वयस्वेत्युच्चैर्या इमा अन्तः पुरुष आप स्ते मे होत्राशᳪसिनस्ते मोपह्वयन्ताᳪहोत्राशᳪसिन उपमाह्वयध्व मित्युच्चैर्लोमानि मे चमसाध्वर्यवस्ते मोपह्वयन्तां चमसाध्व र्यव उपमाह्वयध्वमित्युच्चैस्ता वा एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपहूतो भक्षयत्युदानो यजमानो-ऽथो यत्रै तासां देवताना लोकस्तदुपहूतो भवति सर्वेषां वषट्कर्त्ता चमसं भक्षये द्देवानां वा एतद्यज्ञस्य मुखं यदु-द्गातृचमसं तस्मा दुद्गातृचमस नान्यो भक्षयेदेव विदुषो ह वै यज्ञो न व्यथत एव विदुषो ह वै यजमानस्य स्वर्ग्यं पुत्र पशव्य मिष्ट भवत्येव विद्वान् ह वै यजमानो द्विषन्तं भ्रातृव्य मभिभवत्यथवा भर्ता यो यज्ञे हीनं कुर्यात् ॥ ७ ॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके सप्तमखण्डः ।

यद्धोता जहाति वाग्व तद्यजमान जहाति स यत्तत् करोति स्वां वाच यजमाने दधाति स विष्वङ् वाचा-मुष्मिल्लोके सम्भवति यदध्वर्युर्जहाति चक्षुर्ह तद्यजमानं जहाति स यत्तत् करोति स्वञ्चक्षुर्यजमाने दधाति स विष्वङ चक्षुषामुष्मि ल्लोके सम्भवति यद्ब्रह्मा जहाति मनो ह तद्यज-मानं जहाति स यत्तत् करोति स्वं मनो यजमाने दधाति स विष्वङ्मनसामुष्मिंल्लोके सम्भवति यदुद्गाता जहाति श्रोत्रᳪह तद्यजमान जहाति स यत्तत् करोति स्वᳪश्रोत्रं यजमाने दधाति स विष्वङ् श्रोत्रेणामुष्मिंल्लोके सम्भवति

यत्तदस्यो जङ्घाल्यास्मा ह तद्यजमानं जहाति स यत्तत् करोति स्वमात्मानं यजमाने दधाति स विष्वङ्ङात्मना-मुष्मिंल्लोके सम्भवति यदीशाय(?)सिनो अङ्गान्यङ्गानि ह तद्य-जमानं जहति ते यत्तत् कुर्वन्ति स्वान्यङ्गानि यजमाने दधति ते विष्वञ्चोऽङ्गैरमुष्मिंल्लोके सम्भवन्ति यच्चमसा ध-र्यवो जहति लोमानि ह तद्यजमानं जहति ते ते यत्तत्-कुर्वन्ति स्वानि लोमानि यजमाने दधाति ते विष्वञ्चो लो-मभिरमुष्मिंल्लोके सम्भवन्ति तस्मादेवं विदुषि होतैव न कुर्य्यादपसा भत ऋत्विजामेव विद्वान यजमानो ह्यायुर्मनु-कीर्त्तिर्होतारं योगक्षेमो ब्रह्माणमात्मा च प्रजा चोद्गाता-रम् ।८॥

इति षड्विंशब्राह्मणे द्वितीय प्रपाठके अष्टमखण्डः ।

स यदि पशुता व्याधीयेताऽध्वर्युं मे इदम करिति वि-द्यादथ यद्येन पापिका कीर्त्तिरनुदियाद्धोता म इदं म-करिति विद्यादथ यद्यस्य योगक्षेमो व्यथेत ब्रह्मा म इदं मकरिति विद्या दथ यद्यात्मना वा प्रजया वा व्याधीये-तोद्गाता म इदं मकरिति विद्यात् प्राणदेवत्यो वै ब्रह्मा वाग्देवत्या इतर ऋत्विज स यदि मन्येत ब्रह्मा म इदं मकरिति हरितए हिरण्यं दर्भेनाद्धा प्रबध्य गुच्छ वधाय चतुर्गृहीत माज्यं गृहीत्वा जुहुयात्मम. प्राणाय वाच-स्पतये स्वाहेति यदु वा इतरे नमो वाचे प्राणपतये स्वा-हेति यद्येतरो यदि वेतरे सर्वेष्वेवानुपर्य्यायं जुहुयाद्यमः प्राणाय वाचस्पतये स्वाहा नमो वाचे प्राणपतये स्वाहेत्यथ तद्धिरण्यं ब्रह्मणे दद्या दथ यदाह यशो वाय यशस्य प्राय-

श्चित्तिरिति पुनर्यज्ञ एव स एति उ ह स्वेवाहुतो यज्ञवि-
भ्रष्टस्य प्रायश्चित्तिरिति ॥ ९ ॥

इति षड्विंशब्राह्मणे द्वितीय-प्रपाठके नवमखण्डः ।

ते वा ऋत्विजः स यजमानो देवा वा अन्ये ऋत्विजो
मानुषा अन्ये य देवा याजयन्ति देवलोकमेव स तै रवरु-
न्धेन मनुष्यलोक मथ य मानुषा याजयन्ति मनुष्यलोकमेव
स तै रवरुन्धेन देवलोक मथ य उभये याजयन्ति देवलोक-
ञ्चैव स तै रवरुन्धेन मनुष्यलोक ञ्च स एता देवानृत्विजो
वृणीताग्निर्मे होतादित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो
म उद्गाताऽऽकाशो मे सदस्य आपो मे होत्राशꣳसिनो
रश्मयो मे चमसाध्वर्यव स एतान् देवानृत्विजो वृत्वाथै
तान्मानुषान् वृणीत य एनमभि राधयेयु रव ऋत्विय देव
यजन याचित् स चेतस्मै दद्याद्देवयजनवान् भूया इत्येन
ब्रूयाद्य चेतस्मै दद्याद् यदह देवयजन वेद तस्मिꣳ
स्त्वा ह्यानीत्येन ब्रूया दग्निर्वाव तद्देवयजन भूमिर्वाव
तद्देवयजन मापो वाव तद्देवयजनꣳ श्रद्धा वाव तद्दे व
यजन मेतद्ध वा एन देवयजनमप्रतिषद्वद्धो ह्यतिमेवा
पोरुषेयो नेत्यथ तत एतर्त्विजो देवयजन याचे दग्निर्मे
होता स मे देवयजन ददातु होतर्देव यजन मे देहीत्यथै
रादित्यो मेऽध्वर्युः स मे देवयजन ददात्वध्वर्यो देवयजन मे
देहीत्युच्चैश्चन्द्रमा मे ब्रह्मा स मे देवयजन ददातु ब्रह्मन् देव-
यजन मे देहीत्युच्चैः पर्जन्यो म उद्गाता स मे देवयजन
ददातूद्गातर्देवयजन मे देहीत्युच्चै राकाशो म सदस्य स
मे देवयजनं ददातु सदस्य देवयजनं मे देहीत्युच्चै रापो मे

शौलागएसिन स्तो मे देवयजन ददातु शौलागएसिनो देवयजन मे दत्तेत्युचे रम्मयो मे चमसाध्वर्यव स्तो मे देवयजन ददतु चमसाध्वर्यवो देवयजन मे दत्तेत्युचे स्ता वा एता देवता ऋत्विजामेव याभिर्देवयजन ददाति स दत्ते यजते यदुन्नत भूम्या अनूपर यत्न बहुला ओषधयया लोलमारिणो यत्नाप स्युस्तस्य न पुरस्ताद्देवयजनमात मति शिष्याद् यावाञ्छम्या प्रासोदरपुरषा हाम्यात्मा पौयाएसो भवन्ति यस्येव मति रेचयन्ति काम दक्षिणत आगामुकाईनं दक्षिणा भवन्ति काम पश्चादवरपुरषा हाम्माञ्छ्रेयाएसो भवन्ति काममुत्तरत उत्तराहैन देव यज्योपनामुकाभवत्युत्तरोत्तरिणो हास्य श्रोभवति यस्य पुरस्तात त्रोणि ज्योतीएषि दृश्येरन्नग्निराप आदित्य स्तद्दे-वयजन तच्चिशुक्रिय पुरस्ताच्चित देवयजन पश्चाच्चित श्म शानकरण प्रागुदक्प्रवण न्देवयजन पराङ्दक्षिणाप्रवण श्म शानकरण यथा वै दक्षिण पाणिरेव देवयजन यथा सव्य स्तथा श्मशानकरण यथा श्मशानकरणन्तथाभिचरणोयाना देवयजन मप्यु हैक आहुर्यस्मिन्नेव वक्ष्एय दे शे श्रद्‌-धानो यजत अद्धोत्येवेति ॥ १० ॥

इति षड विंशब्राह्मण द्वितीय प्रपाठके दशमखण्ड ।

## इति द्वितीयः प्रपाठकः ।

---

यथाग्न्यग्ने रसो भवति तेनात एव प्राचीन प्रवरन्त्वथै-तया तयाम परिगिपत श्रद्धोयत्नमाद न तस्मै यदूयेया-

पाप्मेषु नो तस्मै यदग्नावनु प्रहरेयुस्तेनाप एवाभ्यवयन्त्यापो
वै सर्वस्य शान्तिः प्रतिष्ठा पाप्मानꣳ हैव हन्ति यो यजते
तमिमं पाप्मानꣳ हत मपोहराणीति तेनान्तरेण प्रतिपद्यन्ते
चात्वालञ्चोत्करञ्चैतद्वै देवानां तीर्थं तदेतदृषि राहाप्नान
स्तीर्थं क इह प्रवोचद्येन देवाः पथा प्रपिबन्ते सुतस्येत्यं तद्वै
देवानां तीर्थमतीर्थꣳ ह्येव यज्ञस्यान्योन्यत् तस्मादेतेनैव प्रसृते
प्रपद्येतैतेन निष्क्रामेत्तान् प्रच्युतान् देवयजनादमात्मान्
य एतस्मिन्नवकाशे रक्षाꣳसि जिघाꣳसन्त एतदग्निरक्षोहा
सामापश्यत्तान्येतेनापाहत तान्यमुष्मिँ पहतानि सन्तीति
देवा अकुर्वन्नित्येवैतद्रक्षाꣳस्यप सेधति तस्मादु हायोहाय
इति स्तोभातस्तोभत्यहायो स्वहायो न्वित्येवैतद्रक्षाꣳस्यप
सेधत्यग्निरुपति प्रतिदहतो वाहरघाꣳस्येव तत्प्रतिदहति
आदाय आदायस्तोभा अनुपर्त्तन्ते रक्षसामपहत्यै त्रिवृꣳ
समत्रिण दृढ यिग्वꣳ समत्रिण दृढयत्रिणो वै रक्षाꣳसि
पाप्मानोऽत्रिणोऽत्रिण एवैतद्रक्षाꣳसि पाप्मानमपसेधति
तस्य त्रिनिधनमायुर्यं वै सुहुत घ्नन्ति न स पुनरुद्धन्ते
यथाह पुन पुनरादायꣳ सुहुतꣳ हन्यादाहृगीततद्वा आति
च्छन्द सु भवति वारणमिव वा एतच्छन्दो यदतिच्छन्दा
वारणानीव रक्षाꣳस्यरण्यायतनानि ह्रदयया स्व अरण्य
मभयेनाति क्रामेत् ताहृगीततद्वै सप्तपदासु भवति सप्त वै
छन्दाꣳसि चतुरुत्तराणि तद्यथा सर्वै छन्दोभिरभयेनाति
क्रामेत्ताहृगीतस्य त्रिवेचन एकविꣳशति पदानि त्रि
आसाद्य तच्चतुर्विꣳशति चतुर्विꣳशतिरक्षराणा अक्षर
शाम तस्य वा एतद् अक्षरस्य साम्नो ऽक्षराणि

हिङ्कारोऽर्द्धमासाः प्रस्तावो मासा आदि पर्त्तव उद्गीथः पौर्णमास्यः प्रतिहारोऽष्टका उपद्रवो मावास्या निधनं तस्य वा एतत् संवत्सरस्य साम्नो वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनं तस्मादेमन्तं प्रजा निधनकृता इवासते निधनरूपमिवैतर्हि तदाहुः कान्दिश संवभृथ मभ्यवेयुरिति प्राञ्चो भ्यवेयुर्देवानां वा एषा दिग्घत् प्राची वा देवानां दिक्तान्नीनुयन्नः सन्तिष्ठाता इति दक्षिणाभ्यवेयुः पाप्मानएंहैव हन्ति यो यजते तमिमं पाप्मानएंहतं दक्षिणाहराणीति पितृणां वा एषा दिग्यद्दक्षिणा या पितृणां दिक् तान्नीनुयन्नः सन्तिष्ठाता इति प्रत्यञ्चो भ्यवेयुर्मनुष्याणां वा एषा दिग्यत् प्रतीची या मनुष्याणां दिक्तान्नीनुयन्नः सन्तिष्ठाता इत्युदञ्चो भ्यवेयुर्नक्षत्राणां वा एषा दिग्यदुदीची या नक्षत्राणां दिक्तान्नीनुयन्नः सन्तिष्ठाता इत्यतो वावयतमथैव कतमया चापः स्यस्तटभ्यवेयुर्यद्दे विद्वान् कर्म करोत्यस्मादिदमिति वसीयानेव तेन भवति तदाहुः स्रवन्तीष्वभ्यवेयू३ स्थावरासू३ इति स्रवन्तीष्वभ्यवेयु, पाप्मानएं हैव हन्ति यो यजते तमिमं पाप्मानएंह तमापः प्रवहतामिति स्थावरायाः ग्रीषल्यास्नास्वभ्यवेयुरितो मा यज्ञो विक्षुभः प्रत्युपतिष्ठाता इत्यतो वावयतरथैकत रया चाप स्यु स्तदभ्यवेयुर्यद्दे विद्वान् कर्म करोत्यस्मादिदमिति वसीयानेव तेन भवति ॥ १ ॥

इति षड्विंशब्राह्मणे तृतीय-प्रपाठके प्रथमखण्डः।

एकस्यै हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्यमया पञ्चभ्यो हिङ्करोति स उत्तमयैकस्यै हिङ्करोति

स प्रथमया तिसृभ्यो हिङ्करोति स पराचीभिः पञ्चभ्यो हि ङ्करोति स एकया स एकया स तिसृभिः त्रिवृन्निवृत्तो विष्टुतिरभिचरेत् स्तुवीतानोक प्रथमेपर्दैनुजर्या यत्तिस्त्र सन्दधाति व्येव पशुभिः सृजते स्तृणुते भ्रातृव्यं वसीयाऽ आत्मना भवति य एतया स्तुते ॥ २ ॥

इति षडविंशब्राह्मणे तृतीयप्रपाठके द्वितीयखण्डः ।

तिसृभ्यो हिङ्करोति स पराचीभिः तिसृभ्यो हिङ्करोति स पराचीभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिरभिचरत्स्तुवीत वज्रो वै त्रिवृद् वज्रस्त्रिणवो य त्त्रिवृत्त्रिणवाभ्यां पञ्चदश विदधाति वज्रमेव तत्सम्यक् सन्दधाति एवमेव वै वज्र साधुर्यदारभणतोऽणीयान प्रह रणत स्थवीयाऽस्तेन पाप्मानं भ्रातृव्यऽस्तृणुते वसीयाऽ आत्मना भवति य एतया स्तुते ॥ ३ ॥

इति षडविंशब्राह्मणे तृतीयप्रपाठके तृतीयखण्डः ।

एतयैवाभिचरत्स्तुवीत वज्रो वै त्रिवृद् वज्रः पञ्चदशो वज्रस्त्रिणवो यत्त्रिवृत्पञ्चदश त्रिणवै सप्तदश विदधाति वज्रमेव तत्सम्यक् सन्दधात्येव मिव वै वज्र साधुर्यदारभणतो णीयान प्रहरणत स्थवीयाऽस्तेन पाप्मानं भ्रातृव्यऽ स्तृणुते वसीयाऽ आत्मना भवति य एतया स्तुते ॥ ४ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके चतुर्थखण्डः ।

तिसृभ्यो हिङ्करोति स पराचीभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिरभिचरत्स्तुवीत वज्रो वै त्रिवृद्वज्रस्त्रिणवो यत्त्रिवृत्त्रिणवाभ्यामेकविंशं विदधाति

वज्रमेव तत्समस्यक् सन्दधात्येवमेव वै वज्र, साधुर्यदारम्भ-
णतो णोयान् प्रहरणत: स्थवीयाꣳस्तेन पाप्मान भ्रातृव्यꣳ
स्तिणुते वसीयाꣳ आत्मना भवति य एतया स्तुते ॥ ५ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके पञ्चमखण्ड: ।

नवभ्यो हिङ्करोति स तिसृभि: स तिसृभि. स तिसृ-
भिर्नवभ्यो हिङ्करोति स तिसृभि: स तिसृभि स तिसृभि-
र्नवभ्यो हिङ्करोति स तिसृभि स तिसृभि, स तिसृभिरभि-
परतमुचीत वज्रो वै विष्णवो वज्र मेव तत्पराद्य प्रवर्त्तयति
स्तुत्यै तेन पाप्मान भ्रातृव्यꣳस्तिणुते वसीयाꣳआत्मना
भवति य एतया स्तुते ॥ ६ ॥

इति षड्विंशब्राह्मणे तृतीय-प्रपाठके षष्ठखण्ड: ।

स्वरान्त, प्रथम स्विरात्रो गायत्री प्राणो वै गायत्री
प्रजापति: स्वर: प्रजापति मेवाप्नोति निधनान्तो द्वितीय
त्रिष्टुब्वीर्यं वै त्रिष्टुप् त्रिष्टुभ: पुरुष: पुरुष मेवाप्नोतीडान्त
स्तृतीयो जगती पशवो वा इडा पशवो जगती जागता:
पशव, पशूने वाप्नोति प्रहतच्छन्दा: प्रथम स्विरात्र स्तेन सो
यातयामार्योत्तरस्य छन्दाꣳसि व्यूहन्ति जगत्य: प्रतिपदो
भवन्ति जगतीनां लोके त्रिष्टुभ स्त्रिष्टुभां गायत्र्यस्तेन सो
यातयामार्योत्तमस्य छन्दाꣳसि व्येवो हन्ति त्रिष्टुभ: प्रति-
पदो भवन्ति त्रिष्टुभां लोके जगत्यो जगतीनां गायत्र्य स्तेनो
एव सो यातयामाभि या एता अन्योन्यस्यै लोक मभ्य-
ध्यायन् काम मेवेना गमयत्याप्नोति तं काम यस्मै कामा-
यैव आह्रयते तस्माद् गुर्गो न सहग्रहन स्यास्यादिपरि-
चोतौ वहीयाꣳसौ भवत साम्ना दुभयतो दन्त, छन्दन्तै

तैवति स्तुत्वे वषट्कारणिधन भवत्येष वै वज्रस्तमो-जिष्ठो यत्साम वज्रम वहवो वषट्कुर्वन्ति तमेवास्मै वज्रं प्रहरति स्तुत्वा उभे हृहद्रथन्तरे भवत उभाभ्या-मेवास्मै हृहद्रथन्तराभ्यां वज्रं प्रहरति स्तुत्वै परार्धेषु रथन्तरं भवति परार्ध मेवास्मै वज्रं प्रहरति स्तुत्वे तस्य रथन्तर पृष्ठ हृहद्ब्रह्म सामैव वै साम वज्रमेवास्मै वज्रं प्रहरति स्तुत्वै य कामयेत जीवेदिति तस्य हृहत्पृष्ठं कुर्याद्रथन्तर ब्रह्म साम चत्रं वै हृहत्पशवो रथन्तरं चत्रेणै-वास्य पशून् इन्त्यपशुर्भवति जीवति य कामयेत परास्परा वतमियान्न प्रतितिष्ठेदिति पवमाने रथन्तरं कुर्याद्हृहत्-पृष्ठं प्रव मध्य साम हृहद्रथन्तराभ्यां मेवैन मेभ्यो लोकेभ्य उदृत्य प्रवेन प्रप्लावयति परास्परायतमेति न प्रतितिष्ठति यार्धाहरे पवमानमुखे भवत. सर्पौपगवे नानदं क्रूराणि सामानि सम्भरन्ति स्तुत्वै तैल्वको वा बाधको वा यूपस्स्याय प्रवनभ्ये अधिपवणे अग्नये रुद्रवते लोहितः पशुः साद्यन्त्युपाएकन्त्ययोमो शरमयं बर्हिः शौल्वै वैभीदक इध्मो विभिल्वे लोहितोष्णीषा लोहित वाससो निवीता ऋत्विजः प्रचरन्ति स्तृत्वै नव नव दधिया भवन्ति नवय-न्त्येवैन तत् ॥ ८ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके अष्टमखण्डः ।

त्रिवृदग्निष्टोमस्तस्येषु विष्टुति कृत्वाभिचरन्यजेतेषु वधो वै पुरायुषो हन्ति यदिषु विष्टुति करोति पुरैवैन मायुषः प्रहयति त्रिवृदि स्तोमानां क्षेपिष्ठो यत्त्रिवृद्भवत्याशी यज्ञियता इति वषट्कारणिधन भवति सप्त ह भवत्या

सप्तमात् पुरुषा इमायतनो भवति य एतेनाभिचरन्ति समानमितरच्छ्येनेन ॥ ८ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके नवमखण्डः ।

अथैष सन्दंशेनाभिचरन्यजेत यद्वै दुरादानं सन्दंशेन तदादत्ते यद् द्वौ द्वौ स्तोमौ स इव यथाह दुरादानं सन्दंशेनात्त ह्याया इष्टोत्तैव मैवेन मेतेनादत्ते त्रिवृतं स्तोमं सम्पद्यते बृहती छन्दोन वज्रो वै त्रिवृत्पशवो बृहती वज्रेणै-वास्य पशून् हन्त्यपशुर्भवति वैरूपं भवति अप्रमेवैन कराति परिष्टुब्धेव भवति पर्येवेन हरति प्रार्पाहरे पवमान-मुखे भवत. क्रोशो तौपगवे नानदं साम क्रूराणि सामानि सम्भरन्ति स्तुत्यै नि सदंशस्तेन क्रूरः समानमितर-च्छ्येनेन ॥ १० ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके दशमखण्ड ।

अथैष वज्रेणाभिचरन् यजेत वज्रेणैवास्मै वज्रं प्रहरति स्तुत्यै सर्वः पञ्चदशो भवति वज्रो वै पञ्चदशस्तमेवास्मै वज्रं प्रहरति स्तुत्या उक्थ्य, षोडशिमान् भवति पशवो वा उक्-थानि वज्र षोडशी वज्रेणैवास्मै वज्रं प्रहरति स्तुत्यै तस्य महानाम्नी, षोडशि साम भवति वज्रो वै महानाम्नी वज्र. षोडशी वज्रेणैवास्मै वज्र प्रहरति स्तुत्यै समानमितरत् पूर्वेण ॥ ११ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके एकादशखण्डः ।

अतिरात्रश्चतुर्विंशं प्रायणीय मद्दरभिजिच्च स्वरसामानो दिवाकीर्त्य महन्नत्र स्वरसामानो विश्वजिन्महाव्रत-मतिरात्रय विश्वेदेवाः सत्रमासत सोमेन राज्ञा गृह-

प्रतिमा तेऽब्रुवंत्सोम एव नो राजा सर्वत्र विभवेदिति तस्मात्सोमो राजा सर्वाणि नक्षत्राण्युपैति सोमो हि रेतोधा नवाहᳪ संवत्सरस्य गर्भमुपयन्ति नवाहो वै संवत्सरस्य प्रतिमा नव प्राणाः प्राणानेवावरुन्धते प्रजावन्तो ओषा ज्योति रस्युपते य एता उपयन्ति ॥ १२ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके द्वादशखण्डः ।

## इति तृतीयः प्रपाठकः ।

---

ओम् । प्रजापतिस्तपोऽतप्यत तस्य ह वै तप्यमानस्य मनः प्राजायत देवांत्सृजेयमिति तद्दमे देवा असृजन्त दिवा देवानसृजत नक्तमसुरान् यद्दिवा देवानसृजत तद्देवानां देवत्वं यदसूर्यं तदसुराणामसुरत्वं यत्प्रीतत्वं तत्पितॄणां देवा वै स्वर्गकामास्तपोऽतप्यन्त तेषां तप्यमानानाᳪ रसोजायत पृथिव्यन्तरिक्षं द्यौरिति ते अभ्यतपᳪस्तेषां तप्यमानानाᳪ रसोजायत ऋग्वेदः पृथिव्या यजुर्वेदोऽन्तरिक्षात् सामवेदोऽमुष्मात्ते अभ्यतपᳪस्तेषां तप्यमानानाᳪ रसोजायत ऋग्वेदाद्गार्हपत्यो यजुर्वेदाद्दक्षिणाग्निः सामवेदादाहवनीय स्ते अभ्यतपᳪस्तेषां तप्यमानाना पुरुषो जायत सहस्रशीर्षाः सहस्राक्षः सहस्रपात्ते देवाः प्रजापति मुप मुवन् वेदशरीरैर्वा इदमस्तशरीरं न ह वा इद मत्यो समाप्सातेति ते ब्रुवन् को नामासीति स होवाच यशो नामेति तेषां प्रजापतिः सद्यो यज्ञसंस्था मुपैति सद्यो ह वा एष यज्ञसᳪस्था मुपैति यद्गार्हपत्यं प्रादुष्करोति स

श्यादृशेन तस्य यागः गोदोहनेन वा पशुकामस्य। " अथवा श्येनविशिष्टं कर्मान्तरं मत्र विधीयते श्येनयता यजते " लक्षणाया असिद्धार्थकल्पनातो मत्वर्थलक्षणापि यसी। यद्यपि यथा श्येन आददीतेत्यादिवाक्यशेषप्रति• ... सादृश्येन कर्मणि गौणी वृत्तिः श्येनशब्दः सम्भवति तथापि तथ्याऽत्यन्तविप्रकृष्टार्थत्वात् स्वार्थपरित्यागे श्रुति हेतुभङ्गश्च मत्वर्थलक्षणैव युक्ता। अतः सोमेन यजेतेति सत्यपि मत्वर्थे गव्यभावाद्विशिष्टविधिरेवेति तदनुपपन्नम्। गुण• एवात्रपरत्वे एव गुणो विधीयते स एव स्तोतव्य इति श्येन समाह्येव स्तुतिः स्यात् न चात्र यथा श्येन आददीतेत्यादि ... श्येषे तस्य स्तुतिः स्वेनैव स्वस्योपमानेन स्तुतेरयुक्तत्वा• देतैः व्यपदेशात्मकं वाक्यशेषेनैरर्थ्यपरिहाराय विप्रकृष्टार्थ• यापि गौण्या वृत्त्या श्येन शब्दः कर्मणि वर्त्तते। अतः सति सम्भवे गौरवात् सोमादिवद्विशिष्टविध्यङ्गीकरणमयुक्त मित्य• त्यमतिप्रसङ्गेन। अतः श्येननामधेयेन यागेन शत्रुहिंसां भावयेदित्ययमेवार्थः। श्येनशब्दस्य यागे प्रवृत्तिनिमित्तं दर्शयितुं स प्रसिद्धं श्येनसादृश्येन याग स्तौति—श्येनो वै इति। वयसां पक्षिणां मध्ये श्येनाख्यः पक्षी क्षेपिष्ठः क्षिप्रतमः किञ्च श्येनो निपत्य पक्ष्यन्तराणि हन्तु माददीत स्वीकरोति एव। मेवाभिचरन् एव आवृश्य मेतेन यागेना• दत्ते। यद्यपि आदाने मरणकरणता प्रतीयते। तथापि तदादानस्य हिंसार्थत्वाद्भ्रातृव्य हिंसाकरणतेवात्र विधेया। ततः पवमानेषु प्रश्न सति त्रिवृत् स्तोम विधीयते —त्रिवृद्वै स्तोमानामिति। यद्यस्मात् स्तोमाना मध्ये

स्यादनेन तस्य बाधः गोदोहनेन वा चमसस्य। अथवा श्येनविशिष्टं कर्मान्तरं मत्र विधीयते श्येनयागः यजते लक्षणाया असिद्धार्थकल्पनातो मत्वर्थलक्षणापि यसी। यद्यपि यथा श्येन आददीतेत्यादिवाक्यशेषप्रति ... सादृश्येन कर्मणि गौणी वृत्तिः श्येनशब्दः सम्भवति तथापि तस्याऽत्यन्तविप्रकृष्टार्थत्वात् स्वार्थपरित्यागे श्रुति-मुख्यत्वात् मत्वर्थलक्षणैव युक्ता। अतः सोमेन यजेतेति सत्यपि ... गत्वभावादिविशिष्टविधिरेवेति तदनुपपन्नम्। गुण-वाक्यपरत्वे एव गुणो विधीयते स एव स्तोतव्य इति श्येन ... एव स्तुतिः स्यात् न चात्र यथा श्येन आददीतेत्यादि ... तस्य स्तुतिः स्येनैव स्वस्योपमानेन स्तुतेरयुक्तत्वा-... व्यपदेशात्मक वाक्यशेषनैरर्थ्यपरिहाराय विप्रकृष्टार्थ-यापि गौण्या वृत्त्या श्येन शब्दः कर्मणि वर्त्तते। अतः सति सम्भवे गौरवात् सोमादिवद्विशिष्टविध्यङ्गीकरणं मयुक्तमित्य-लमतिप्रसङ्गेन। अतः श्येननामधेयेन यागेन शत्रुहिंसां भावयेदित्ययमेवार्थः। श्येनशब्दस्य यागे प्रवृत्तिनिमित्तं दर्शयितुं स प्रसिद्धं श्येनसादृश्येन यागं स्तौति—श्येनो वै इति। वयसां पक्षिणां मध्ये श्येनाख्यः पक्षी क्षेपिष्ठः क्षिप्रतमः किञ्च श्येनो निपत्य पक्ष्यन्तराणि हन्तुं माददीत स्वीकरोति एवमेवाभिचरन् एनं भ्रातृव्यमेतेन यागेना-दत्ते। यद्यपि आदाने मरणकारणता प्रतीयते। तथापि तदादानस्य हिंसार्थत्वाद्भ्रातृव्यं हिंसाकारणतैवात्र विधेया। ततः पवमानेषु प्रशंसति त्रिवृत् स्तोमं विधीयते —त्रिवृद् वै स्तोमानामिति। यद्यस्मात् स्तोमानां मध्ये

एतदुपहव मुपलक्षणम् । बृहदपि पराचीनेव कुर्य्यादि-त्यर्थः । अमीमार्थं प्रशंसति—पराचमेवास्मै इति । तथा सत्यस्मै भ्रातृव्याय पराच मनावर्त्तमेव वज्रं प्रहरति तस्य स्तृत्यै । एवं भ्रातृव्य हिंसाकारस्य होतुः पृष्ठ-स्तोत्र बृहत्साम दृष्टमिति दर्शयित्वेदानीं जीवत एव भ्रातृव्यस्य पश्वादिराहित्य मिच्छतो यजमानस्य प्रयोगं दर्शयति—य कामयेतेति । यं भ्रातृव्यं जीवन्तं जीयन्तं पश्वादिभिर्हीयितेति यो यजमानः कामयेत तस्य होतुः पृष्ठं बृहत् कुर्य्यात् । बृहत्साम रथन्तर यतः अतः वीर्य-मेव बृहत्त्वं इत्युक्तात्ययव यव रथन्तरं । कार्यकारणभा-वात्तस्मात् यनेयेनास्य भ्रातृव्यस्य पशून् हन्ति । तथा सति भ्रातृव्योऽपश्च पशुरहितो भवति । अतः जीवते एव माप्नोति । अथ जीवत एव भ्रातृव्यस्याप्रतिष्ठाका-मस्य यजमानस्य प्रयोग विधत्ते—य कामयेतेति । य भ्रातृव्य परम्परागतमिति दूरा मियादन्छेत्यापि प्रति तिष्ठेदिति यो यजमानः कामयेत तस्य पवमाने रथन्तर साम कुर्य्यात् तदेतदाह द्राह्यायण पवमाने रथन्तर कुर्य्यादिति । बृहत्या मेकर्चाना स्थाने स्यादेकं तद्धि बार्हताना स्थानमिति । अस्यार्थः—स्तोत्रकल्पे ये बृहत्यां एकर्चा अन्यकारेण कृता पुनानः सोमधारयेति वषट्‌-कारनिधनमेकस्या यौद्धवमेकस्या यौधाजयमेकस्यामिति तेषां स्थाने रथन्तर कार्य तद्धि बार्हतानां साम्ना स्थाने रथन्तरस्य बृहत्त्वासुत्पन्नमिति । तथा बृहत्पृष्ठ कुर्य्यात् ब्रह्म साम पृष्ठ साम कुर्य्यात्तस्य एन भ्रातृव्य बृहद्ब

न्तराभ्यां मेव एभ्यो लोकेभ्य उद्धृत्य ध्रुवेण साम्ना प्राप-यति गमयति अप्रतिष्ठं कुर्य्यादित्यर्थः। सोऽपि परां परा-वतं, अतिदूरमेति गच्छति न प्रतितिष्ठति। पुनर्भ्रातृव्य-द्विषाकामस्यैव प्रयोगविशेषं दर्शयति—वार्षाहरे इति। पवमानमुखे माध्यन्दिनार्भवयोः पवमानयोर्मुखे वार्षाहरे एते नामधेये सामनी भवतः। गायत्रसाम,ऊर्द्ध्वं वार्षा-हरयोः साम्नोः सर्वत्राप्यस्य,तत्वात् अत्र माध्यन्दिनपव-माने पर्य्यूषुप्रधन्व इति एकस्यां गायत्र परस्यां वार्षाहर, सामैवपवमाने तु यस्मै मदीनरेत्र इति गायत्र-वार्षाहरे एकस्यामेवेति, कल्पकारवचनं निर्णीयते। तथा सर्पीपगवे सामनी, एव पवस्वेन्द्रमच्छेति पवस्योर्द्ध्व-योर्नासिद पुरोजितीवो अन्ध इति पवमानयोरिति श्रुतावि-यत् द्विसंख्यानि सामानि,अम्बरन्ति उद्गातारः सम्पाद-यन्ति सुर्य्यैभ्रातृव्यस्येति। यथाश्रुताकर्मेषि यूपादीनां स्वेनयाने प्रकृतिभ्यो विकाराभिधीयन्ते। तत्र प्रथारधर्मं यूपस्य विकारं दर्शयति—तैल्वको वा इति। तैल्वको नामापघोरः कश्चित् वृक्षविशेषः। तद्विकारो बाधको वा नाम राजवृक्षः तद्विकारो यूपः कर्त्तव्यः। ततश्चायं हननसाधनं यथायूपं तदाकारोपसङ्गाच्छयाज यूप कुर्य्या-दित्यर्थः। तथाच द्राह्यायणः—यूपश्चाप इति। अथ-वाक्तः स्यादिति वा। अधिदवचनयोर्विकारं दर्शयति—येन शकटेन सवं नयति तस्य च फलयोर्मध्यमे कम्बक यदमक्ष नाभिमन्दक नभ्योदैव। तेऽधिपक्षकस्य कुर्य्यात्। तथाच द्राह्यायणः—येन वागेन भूत निर्व-

नत्। मित्रं हुवे पूतदक्षम्। उस्रा मदन्तु सोमाः। ता हुवे ययोरिदम्। अर्षा सोम द्युमत्तम इति गायत्र मेकस्याम्। वार्षाहर मेकस्याम्। याक्रदक्षमेकस्याम्। पुनानः सोमधारया वषट्कार निधनमेकस्याम्। रौरवमेकस्याम्। यौधाजयमेकस्याम्। औशनमन्त्यम्। रथन्तरञ्च वामदेव्यञ्च हव्यञ्च कालेयञ्च। यज्ञे महोवरीञ्च इति गायत्रवार्षाहरे पवस्वेन्द्रमच्छेति सफौपगवे पुरोजिती वो अन्धस इति नानन्दान्धीगवे काममन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम विष्ठतः पवमाना अग्निष्टोम साम च तिसृभिराज्य पृष्ठानीति। अस्यायमर्थः—तिसृभिराज्यानि इति पृष्ठानीति॥ २॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे चतुर्थप्रपाठके द्वितीयखण्डः।

---

## अथ तृतीयखण्डः।

एव श्येनयाग सविशेष प्रतिपाद्य इदानीं विवृदग्निष्टोम निरूपयितुं प्रतिजानीते—विवृदग्निष्टोम इति। उच्यते इति विशेषः। इदानीं विधत्ते—तस्येषुमिति। तस्य, विवृदग्निष्टोमस्य इषु सञ्ज्ञका विष्टुतिं कृत्वाऽभिचरन् भ्रातृव्यञ्जिघांसुस्तेन हे इषु सञ्ज्ञके विष्टुती प्राक् प्रदर्शिते अत्र विशेषकथनात्तयोरन्यतरा याह्या। यथोक्तं प्रशसति—इषुवधो मे इति। वत, इषुवधः इत्याख्यं

हननसाधनं यथायुध मायुधः शतवर्षलक्षणात् पुरा पुरस्तादेवं हन्ति। तस्माद्यदिषुं इच्चाख्यं विष्टुतिमत्र करोति कुर्यात् तर्हीमं भ्रातृव्य मायुषः पुरैव प्रहततया विष्टुत्या प्रकर्षेण छिनत्ति। तत्त्रिवृत्स्तोमं प्रशंसन् विधत्ते—त्रिवृदै स्तोमानामिति। यस्मात्स्तोमानां स एव क्षेपिष्ठः अत आशीयः अत आशुतर भ्रातृव्यं स्तृणुते हिंसानोति त्रिवृदेव सोमो भवति नान्य इत्यर्थः। सामविशेषं दर्शयति—वषट्कारनिधनं भवतीति। व्याख्यातचरम्। यद्यपि समानमितरं तेनैव वषट्कारनिधनं सिद्धं तथापि न वचनं पवमाने रथन्तरं कुर्यात् बृहत्पृष्ठं भ्रुव ब्रह्मसामेति विहितस्य धर्मविशेषस्याप्राप्त्यर्थम्। सामविकारं प्रशंसन् विधत्ते—सप्तहं भवतीति त्वामिद्धिहवामह इत्यस्यामृचि सप्तहं सप्तहं नामकं साम भवति। पृष्ठस्य तेन साम्ना सप्तहात्पुरुषादभिविधावाङ् सप्तपुरुषपर्यन्तं सोऽनायतनो भवति। अनायतनो भवति अप्रतिष्ठितो भवति। यद्भ्रातृव्य मेतेन यागेनाभिचरन्ति। अनेनास्य साम्नः सप्तहनामकत्वं दर्शितं भवति सप्तपुरुषहननसाधनत्वप्रतिपादनात्। यद्वा तस्य त्वामिद्धिहवामा इत्यस्यां गानेन सप्तहकारसम्पत्तेः सप्तहनामकत्वं द्रष्टव्यम्। एव विशेष मत्र उक्ता इदानीं श्येनवैशेषिकधर्मातिदिशति—समानमिति। ये श्येनयागे वैशेषिकलोहितोष्णीषत्वादयो धर्मा विहिताः ते सर्वेऽप्यत्र कार्या इत्यर्थः। नन्विसरमष्टस्य सविहितत्वाच्छ्येनवैशेषिकधर्माणाश्च सविहितत्वेन तद्वाचकत्व मयुक्तम्। किन्तु

अतिदेशत । प्राप्ता वै ज्योतिष्टोमधर्म्मास्ते ऽश्येनेऽपि विद्य मानाः तत्साद्दृश्यसत्ता पादयन्तीति तदनुवादो युक्त इति चेत् न सत्यमितरशब्दः सन्निहितपरः न तु तच्चातपर वसुः अपितु यत्पूर्वोक्तसदृशं सन्निहित तदेवेतरशब्द आचष्टे । तथा सति यद्योदकप्रात ज्योतिष्टोमिक धर्म मानतत्पूर्वं निर्दिष्ट ससघादिधर्मसद्दृशमेव प्रकृताः लोहि तोष्णिपादयः श्येनवैशेषिका वैशेषिकधर्मत्वेन सद्दृशास्ते सन्निहित मपि ज्योतिष्टोमिक धर्मजात परित्यज्य साद्दृ श्यमादाय श्येनवैशेषिकाणा मेव लोहितोष्णिषत्वादीन मभिधानमिति युक्त वदिष्याम इति ॥ २ ॥ ।

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
चतुर्थप्रपाठके तृतीयखण्ड ।

---

अथ चतुर्थ खण्ड. ।

अथ सन्दयाख्यं याग प्रतिजानीते—अथैष सन्दंश इति । अथानन्तरमेव वक्ष्यमाण, सन्दंशः आदानग्रहण-साधनत्वेन सन्दंशसाम्यात् सन्दंशाख्यो यज्ञः उच्यत इति । विशेषत्वं विधत्ते—अभिचरन्निति । तेन सन्दंशयागेनाभि-चरन् जिघांसुर्यजेत तत्साद्दृश्यादय क्रतु' सन्दंश: तेन क्रियत इत्यत्राह यद्वै दुरादानमिति यन्दुरादान तप्तायः पिण्डादि तत्सन्दंशेन आदत्ते लोहकार । किमत्र सन्दंशसाद्दृश्य कथ च सन्दंशवदनेन क्रियत इत्यत्राह—चत् द्वौ द्वौ

स्तोमाविति। द्वे त्रिवृतौ स्तोमे द्वे द्वादशे द्वे एकविंशे द्वे चतुर्विंशे द्वे त्रिणवे इत्येष द्वौ द्वौ स्तोमौ समानौ यत्र भवतस्तेनाय क्रतुः सम्पद्यतइत्र तत्र यथाह—यथा खलु दूरादानमादातुमशक्य तथाय: पिण्डादि सम्पद्येनानुजायत पर्यायाद्‌विहित एवम एव ज्यावृत्यमिति यागेनादक्षे अस्मिन्यागे सर्वेषां स्तोमानां त्रिवृत्‌स्तोमसम्पत्ति तदीयानां स्तोत्रीयाणां बृहतीसम्पत्ति चानूद्य प्रशंसति त्रिवृत स्तोम सम्पद्यत इति। अत स्तोमगणस्त्रिवृत्स्तोम सम्पद्यते स्तोत्रीयाणा यथोक्तबृहतीच्छन्द सम्पद्यते। तत्‌त्रिवृद्वज्रो वै वज्र एव। बृहती पशव: तेनास्य पशून् वज्रेणैव इन्ति तथा सति भ्रातृव्योऽपशुर्भवतीत्यत्र त्रिवृत. सम्पत्तिरेव द्वे त्रिवृतौ स्तोमे इत्यादिना प्रदर्शितानां स्तोमानां त्रिवृत्त्रिणवयोर्यासं त्रिवृत इति त्रिवृत् सम्पत्तेरसिद्धत्वात्। न वक्तव्या त्रिवृत्त्रिवृतयोर्यासं २६ चत्वार स्त्रिवृता इति।। द्वादश पञ्चदशा। एकविंशश्च चतुर्विंश द्वाभ्यां द्वादशाभ्यां द्वाभ्यां पञ्चदशाभ्यां नवतिरित्यतो दश त्रिवृत सम्पद्यत इति बृहतो सम्पत्तिस्तु यथोत्तरया चतुर्विंशति सङ्ख्या त्रिवृद्भि स्तोत्रीयाणां षोडशोत्तरया शतद्वयेन २१६ षट्‌बृहत्य सम्पद्यत इति। स्तोत्रविकार प्रशंसन् विधत्ते—वैयश्व. भवतीति। पुनान सोमधारेत्यस्यां ऋचि वैयश्वम्। वियश्व. कश्चिदृषि तेन दृष्ट साम वैयश्व भवेत्। तेन एव भ्रातृव्य व्यश्वविगताश्वमेव करोति शब्दसाम्यात् श्रुति। तदेव प्रकारान्तरं स्तौति—परिद्वेष्ट भवतीति। वैयश्वमेव साम द्वेष्ट

षाव्यर्थे वक्षाय समभिमायः । उ१२ । श्रस्२ । फठ्२ । मृस्१ ।
इस्२ । मायचक्रमिति । यौनाशुत्वमं पुरोजितीवो ग्रन्थस
इत्यभिं सुचे ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
चतुर्थप्रपाठके चतुर्थखण्डः ।

---

अथ पञ्चमखण्डः ।

अथ प्रतिज्ञापूर्वकं वज्रयागं दर्शयति—अथैषवज्र इति ।
अथानन्तर मेष वक्ष्यमाणो वज्रो वज्रसाहश्यादज्राख्यो
याग उच्यत इति शेषः । एतेन वज्रेणाभिचरन् भ्रातृ-
व्यजिघांसुर्यजेत वज्रसङ्घातात्मकत्वादयं प्रज्रो यज्ञः सङ्घा-
तिनां स्तोत्रीयाणां वज्रात्मकत्वात्तेन वज्रेणैव वय मस्मै
भ्रातृव्याय प्रहरति स्तृत्यै तस्य हिंसार्थम् । किं पुनः समु-
दायिनो वज्रा यत्समुदायो वज्र इत्याशयङ्क्य तद्दियत्तु
राह—सर्वः पञ्चदशो भवतीति अस्य सर्वाण्येव रूपाणि
स्तोत्रीयाणि पञ्चदशानि । तेन सर्वोऽप्यवयवी पञ्चदशो
भवतीति । किं तत इत्यत्राह—वज्रो वै इति । पञ्चदशो
वै वज्र एव ऐन्द्रत्वसाम्यात् यतस्तदवयवानि स्तोत्राण्यपि
वज्र रूपाणि । तेन त प्रक्षिपं हिंसासाधन मेवास्मै
भ्रातृव्याय प्रहरति स्तृत्यै । तद्धर्मविशेषं दर्शयति—उक्थ्यः
षोडशिमान् भवतीति । उक्थ महतीतित्युक्थः । उक्-
थार्हः उक्थवान् भवतीत्यर्थः । किञ्च षोडशिमान् भव-
तीति तदुभय स्तोति । पशवो वा उक्थानीति । उक्-

यानि पशवो वै पशव एव तत्साधनत्वात् षोडशी वज्र षोडशिमानुष्टुप् कुर्वन्तीति वचनात् षोडशिना सानुष्टुप् वै वाग्वा अनुष्टुब्वाचि वज्र इति प्रशंसनात्। षोडशिनो वज्रत्वेन तेन वज्रेण वज्र मस्मै भ्रातृव्याय प्रहरति स्तृत्यै भ्रातृव्यपशूना रथाना पशुरूपत्वेन शुत्तरत्वत्वात येभ्यो गन्तव्य तत्र षोडशिसामः। प्रकारेषु गान दर्शयति—तस्य महानाम्न्य इति। तासु षोडशिसाम कुर्यादित्यर्थः। तदेतत् प्रश सति—वज्रो वै महानाम्न्य इति। महानाम्नी वज्र। ऐन्द्रत्वसाधर्म्यात्। सन पर्यैति हिंस इति लिङ्गाद्दीर्घत्वसाम्याद्वा षोडशी वज्र। षोडशिनो वज्रत्व प्रागेवाऽऽदर्शि। तस्माद्वज्रेणैव वज्र मस्मै भ्रातृव्याय प्रहरति स्तृत्यै। तस्य सन्दर्शनेन विकारधर्मान् अतिदिशति—समानमितरत् पूर्वेणेति। पूर्वेण अनन्तराः क्तेन सन्दर्शेन इतरत् गान सन्दर्शे ये विशेषधर्मा विहितास्ते अत्र कार्या इत्यर्थः। अत्र कन्य—पवस्वेन्दोष पासुतापञ्चत्ववते स्वध इति पुरस्तात्पर्यासस्य तृच उद्धरति। सवासाह्णीय पुरोजिती वो अन्धस इति नानद मेकस्या तस्या मेवाभीगव श्यावाश्व मेकस्या साममेकस्या तथाषा यद् द्वितीय प्रमएडीयमौपगवसुद्दमीय महानाम्न' षोडशि साम समानमितरत्पूर्वेण सर्वः पञ्चदशः क्रतो ज्योतिष्टोमः प्रकृतिभूतज्योतिष्टोम. कार्य्य इत्यर्थ. ॥ ५ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशनाम्ब्राह्मणे द्वितीयब्राह्मणे चतुर्थप्रपाठके पञ्चमखण्डः।

अथ षष्ठखण्डः।

अथ पञ्चदशोऽस्मिन्प्रपाठके त्रयोदशाह वैश्वदेवाख्य सत्रं निरूप्यते—तत्राहःक्लृप्तिं दर्शयति—अतिरात्र इति। अतिरात्र चतुर्विंशस्तोमयुक्त प्रायणीय मह्वरिति। एते प्रथमे अहनी अभिजिदाद्यौ विश्वजिदन्तौ मध्यमौ नवरात्रः महव्रत मतिरात्र इत्येत अन्तिम अहनी इति। तदेतत्सर्वं विश्वजिदेव कर्तृत्वेन च प्रशंसति—विश्वे-देवा इति। राजा दीप्तेन सोमेन गृहपतिना सह विश्वे-देवाः सत्र मासत एव ब्रुवन्तोऽस्माक सर्वेच्च सर्वेष्वपि सोम एव राजा विभर्विशेषे भूयादिति। अतएवं तस्मात् सोमो राजा सर्वाणि नक्षत्राण्युपैति प्राप्नोति सोमो हि। किञ्च हि यस्मात् सोमो रेतोधा. रसात्मकत्वे लोहितादि परिणामद्वारेण रेत आधाने हेतुरसावपि सोमो गृहपतिः कि शस्तमित्यर्थ। तदीयं मध्यमनवरात्रमित्यनुवदति—नवाहमिति। य एतत्सत्र मुपेयुः ते सवत्सरस्य प्रकृति भूतस्य सवत्सर साध्यस्य गवामयनस्य विकृतित्वाच्चयो-दशाहं सत्रमपि सवत्सरनाम्नोच्यते। तस्य गर्भं मध्यमं नवाह मुपयन्तीति। अनूदितमर्थं स्तौति—नवाहो वै इति। नवाहो वै अय नवरात्र एव सवत्सरस्य समस्त प्रतिमासदृशः तत्र अन्याना सर्वेषां स्तोत्राणामाधारातिशयतो विद्यमानत्वात्तथा नवमा। अथ नवाहो नवसङ्ख्याका प्राणा सप्तशीर्षण्याः प्राणाः द्वाववाञ्चेति श्रुतेः। य एत नवाहं सुपेयु. ते नवप्राणानपरस्मन्ते प्राप्नुवन्ति।

प्रकारान्तरेण स्तौति—प्रजावन्तो इति। य एता रात्रीः। नवरात्रमित्यर्थः। उपयन्ति ते प्रजावन्तः। पुत्रपौत्रादियुक्ताः रेतोधा न हेतुसोमग्रहर्त्विकयागानुष्ठाना जीवाः शतवर्षलक्षणपुरुषायुषश्च सन्तः प्राणात्मकनवरात्रोपायना ज्योतिः प्रकाशं कीर्त्तिं मश्नुवते प्राप्नुवन्ति। फलान्तरस्याधिकस्याविधानादेत देव फल रात्रिसत्रन्यायेने त्ववगन्तव्यम् ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
चतुर्थप्रपाठके षष्ठखण्डः।

---

अथ सप्तमखण्डः।

वैश्वदेवं सत्र निरूपयितु मादौ तत्प्रशंसार्थं देवादिविषया माख्यायिकामाह—प्रजापतिस्तपोऽतप्यत इति। प्रजापतिर्विधाता पुरा तपोऽतप्यत चकार। तस्य तप्यमानस्य विशुद्धस्येदानीं देवान् सृजेयमिति मनोबुद्धिः प्रजावत। ततस्त इमे प्रसिद्धा इन्द्रादिदेवास्ते वासृज्यन्त। कथं दिवा अहनि देवान् नक्तं रात्रौ असुरान् यथतो दिवा देवानसृजत प्रजापतिः तद्देवानां देवत्वमिति तेषां तद्दीप्तिमत्वं यथतो असूर्य्यं न विद्यते सूर्य्यो यस्मिन् तदसूर्य्यं नक्तं कालाध्वनोरत्यन्तसंयोग इति यान् अस-

सतीत्यनुषङ्गः तत्तेनासुराणां मसुरत्वं कर्मणि प्रकाश-राहित्यं यद्यतः पायान इति ततः पीयन्त इति कर्त्तरि क्विप्। तेषां भावः पीतत्वं कव्यस्यामतस्य पीतत्वं तत्तेन पितृणां पितृत्वम्। सर्व्वे ताद्दगादेशः किन्तत इत्यत्राह— देवा वै स्वर्गकामाः। ततस्ते देवा अग्निहोत्रात् स्वर्गं कामयमानाः सन्तः तपः अतप्यत तेषां तप्यमानानां तेभ्यस्तप्यमानेभ्य पृथिव्यन्तरिक्ष द्यौरिति लोकत्रयात्मको रसोऽजायत। तत्सारभूता पृथिव्यादयो लोका अपि अभ्यतपन्। ऋग्वेदादीनुद्दिश्य तपश्चक्रुः तेभ्यः तप्यमा-नेभ्यः ऋग्वेदात्मको रसोऽजायत। कथ पृथिव्या ऋग्वेदो रसः समजनि एव मुत्तरत्रापि ते ऋग्वेदादयः अभ्यतपन्। तेभ्यो गार्हपत्यात्मको रसोऽजायत। कथं ऋग्वेदाद्गार्ह-पत्योऽजायत। समान मन्यत्। गार्हपत्यादयोऽपि अभ्यत-पन्। तेभ्यस्तप्यमानेभ्य. सहस्रशीर्षा: अपरिमितमूर्द्धा सह-स्राक्षः असङ्ख्यातनयनः सहस्रपात् अपरिमितपादः पुरुषो रसोऽजायत। एवं चतुर्थरसात्मकत्वात् प्रशस्तः ततोऽयं पुरुष इत्यर्थः। भवत्वेव तत. किमित्यत्राह— ते देवाः। ततः ते· देवाः प्रजापतिं स्रष्टार मुपाधावन् उपेत्य च वेदशरीरैर्ऋग्वेदाद्यात्मकैर्गार्हपत्यादिभिर्यद्यत-शरीर मुत्पन्न तदिद सर्व्वैर्न समाप्यत समाप्तिं न प्रा-प्नोतीति शब्दस्त्वे तावद्द्योतनार्थः। स पुरुषः को नामकः स्वस्यापित्येव प्रजापति मब्रुवन्। अन्तिम इतिकारो देवानां प्रश्नपरिसमाप्तिद्योतनार्थः। प्रजापतिरुत्तरमाह— सहोवाच। स तैरेव पृष्ट प्रजापतिरुवाच। यज्ञो नाम

अग्निहोत्रं यज्ञाना मग्निहोत्र यज्ञ एव सोऽयं पुरुष स्ततो-
ऽन्यत् किञ्चिन्नास्तीति तदिदं विधित्सति अग्निहोत्रं
सद्यो यज्ञस्थात्वेन प्रशंसति—तेषाम्। तेषा मुपसन्नानां
देवार्थं प्रजापतिः सद्यो यज्ञसत्त्वामुपैति। सद्यः समाप्य-
मानयज्ञकाग्निहोत्रप्राप्नोतीत्यर्थः। अतएव एषोऽग्निहो-
त्ररूपो यज्ञ स्था समाप्त मुपैति प्राप्नोतीत्यत दोहनीया-
दीतिकर्तव्यताया अभावात् कथं मस्य यज्ञत्वमित्याशङ्क्य
प्रसिद्धज्योतिष्टोमादि यज्ञसाद्दस्यसिद्ध्यर्थमित्वादोहनीयादि
इति कर्तव्यतां सम्पादयति—यदार्हपत्यम्। यदार्हपत्य
मग्निं प्राङ्करोति अग्निहोत्रार्थं प्रादुर्भावयति सा दोह-
नीया दोहनीयाख्येष्टिः उपकारत्वसाम्यात्। यत्समि-
धोऽभ्यादधने समिदाधानं कुर्वन्तीति यत्तदुपसदः उपस-
दाख्यो होमः। अथाग्निहोत्रे उत्पूताज्यस्कन्दने प्रायश्चित्तं
दर्शयति—अथ यस्य। अथ यस्याज्य मुत्पूतं स्कन्दति सा
वैस्वयानास भूत्वा यजमानः प्रमायुर्भवति मरणशीलो
भवतीत्यर्थः। तन्निमित्त वरो देयः गोरूपां दक्षिणां
दद्यादित्यर्थः। सैव दक्षिणा तस्याः स्कन्दस्य प्रायश्चित्तिरिति
प्रत्यवाय परिहारार्थं कर्मेत्याहु ब्रह्मवादिनः। अनुत्पूता-
ज्यस्कन्दनप्रायश्चित्तमाह—अथ यस्य। अथ यस्य यजमा-
नस्य सम्बन्धि आज्य मनुत्पूत उत्पवनरहित स्कन्दति पात्र-
मसावस्कद्यमाना नस्कन्दत्पर आज्याहुतिः ततस्तेन आहुत्या
यजमानस्य चित्तं प्रमायुर्भवति तन्निमित्तं नानाविध
द्रव्यं देयं सैव तस्या अनुत्पूतस्कन्दप्रायश्चित्तिरिति। अग्नि-
होत्रे सवनत्रयं सम्पादयति—यद्गार्हपत्ये। गार्हपत्ये

ऽग्नौ जुहोतीति यत्तदेव प्रातः सवनम्। प्राशव्यसाम्यात्। एवमन्यदपि। यन्मार्जयते सोऽस्यावभृथ इति तत्रैवोदवनीयादि सम्पत्ति दर्शयति—यदन्नाददाति अन्नादि हवीषि अदत्वा ददाति यन्नोदयनीयस्य तदाख्यस्य कर्मण उदवसानीयस्य च समाप्त्यै कृत भवतीत्यर्थः। अग्निहोत्र एव मन्थने अनुत्पादे विकल्पेन प्रायश्चित्तं दर्शयति—अथ यस्याग्नि। अथ पुनर्यस्य यजमानस्य अग्निर्मथ्यमानो न जायेत तर्हि अन्य माहृत्य लौकिक मग्नि मानीय अन्यस्मिन्नवकाशे आहवनीयाग्नौ व्याहृतिभिर्जुहुयात्। लौकिकाग्नेरप्यभावे ब्राह्मणस्य हस्ते जुहुयात्। एवमन्यदपि व्याख्येयम्। तथाश्वलायन.—अग्निहोत्रकाले अग्नावजायमाने अन्यमानीय जुहुयात् पूर्वालाभे उत्तरोत्तर ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु, इत्यायग्निहोत्रे। स्वय होमस्तुत्यर्थं गौणकर्तृपुर सरमुत्तरोत्तराख्यान् कर्तृन् दर्शयति। अन्यैः यत अन्यैः शिष्यादिव्यतिरिक्तैः। यताहुताऽऽहुतयो हुतान् कृतान् होमा नपेक्ष्याशिष्य कृतमिथ्येण कृत एको होम वरः उत्कृष्ट.। एव मन्यान्यपि व्याख्येयम्। नन्वेवं किन्तत इत्याह—स्वयं होता। यत एवमात्मकृतो होमः प्रशस्त' तस्मात् स्वय होता। देवाना माहर्ता स्वयमेव दोहोत्यग्निहोत्रार्थं पयसा दोग्धा च स्वयमेव यजमानः स्वयमेवाग्निहोत्र मुपतिष्ठेत। तत्र दक्षिणां दर्शयति—हौम्यमेषम्। हौम्यमेषं हुतावशिष्ट हविरेव दक्षिणा नान्यदित्यर्थः यथोक्तमग्निहोत्र प्रशसति—सर्वेहं वा। य एवोक्त रीत्या विद्वान् जानन्नग्निहोत्र जुहोति। एतस्य सर्वेदं-

चक्रतु रग्निष्टोमादिभिरिष्टं भवति सर्वे क्रतवः कृता भवन्तीत्यर्थः ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे पञ्चमप्रपाठके प्रथमखण्डः ।

---

अथ द्वितीयखण्डः ।

यदुक्तमग्निहोत्रमात्रेणैव सर्वक्रतुभिरिष्टंभवति तदेतदाख्यायिकयोपादयति—प्रजापतिर्वा । यतः पुरा प्रजापतिः खलु एतत् प्रसिद्धं सहस्रसंवत्सरः वत्सरशब्दो दिनपरः शतायुः पुरुष इति श्रुतेः । सहस्रसंवत्सरजीवित्वं मनुष्यस्य कस्याप्यभावात् । गन्धर्वादीनां सहस्रसंवत्सरजीवनेऽपि तेषामल्पसंज्ञारायासामर्थ्यान्नाधिकारः । न च यो मासः स संवत्सर इति दर्शनात् संवत्सरशब्दो मासपर इति शङ्कनीयं तत्राप्याधानादूर्द्धं सहसाजीवना सम्भवात् । नापि संवत्सरप्रतिमा वै द्वादश रात्रय इति प्रयोगाद् द्वादशरात्रपरता संवत्सरशब्दस्येति शङ्कनीयम् । प्रतिमा विशेषणत्वे नैवात्र संवत्सरशब्दस्य प्रयोगाच्चतुर्दशरात्रिषु प्रयोगादिति । अतः सहस्रदिवससाध्यं सत्र मसृजतेत्यर्थः । सृष्टा च प्रजापतिः तेषा मुपसन्नानां देवानां मध्ये सहस्रसंवत्सरसाध्ये सत्रे गवामयन मवाकल्पत् न्यरोत्सीत् तच्च गवामयनं श्वादशाहे द्वादशाहसाध्येऽवारुन्धदित्यनुषङ्गः । एवमन्यदपि व्याख्येयम् ।

तस्मादग्निहोत्रे सर्वस्याप्यवरोधात्। अग्निहोत्रमात्रेण सर्वैर्यज्ञक्रतुभिरिष्टम्भवतीति सिद्धमित्यर्थः॥ २॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे पञ्चमप्रपाठके द्वितीयखण्डः।

—

अथ तृतीयः खण्डः।

अथेदानीमौदुम्बरीविशेषो निरूप्यते—तत्र औदुम्बर्या उच्छ्रयणं विधातुं प्रशंसति—प्रजापतिर्देवेभ्यः। पुरा प्रजापतिर्देवेभ्यः स्तोयेभ्य असुषिरमूलां अच्छिन्नमूलां अग्रन्थिं ग्रन्थिरहितां पृथुबुध्नां स्थूलमूलां एकजां अनेकशाखारहिताम् औदुम्बरीं मुच्छ्रयति अतएतादृशौदुम्बर्य्या उच्छ्रयणं प्रशस्तमित्यर्थः। कियत्परिमाणा औदुम्बर्येत्यत्राह—यजमानः। औदुम्बरी यजमानसम्मिता भवतीत्यर्थः। तथा च श्रुत्यन्तरम्। यजमानेन सम्मितौदुम्बरी भवतीति। यदि कुब्जादयो यजमानाः तदा कथमित्यायङ्काह—अथ कुब्जा। कुब्जा वामना ह्रस्वाय भवेयुस्तर्हि ऊर्ध्वबाहवः स्युः। तैरूर्ध्वबाहुभिरौदुम्बरी समा यतोऽस्याः अच्छेदनं कुर्यात्। प्रश्नपूर्वकमौदुम्बर्य्या विशेषेण छेदने सङ्ख्याविशेषं दर्शयति—औदुम्बरी। कतिछदना भवतीत्यर्थः। अथोत्तरं—अग्निष्टोमसाध्यः। केष्वेषु यज्ञेषु औदुम्बरी नवछदना भवतीति वैश्वस्तोमाख्येषु यज्ञेष्वौदुम्बर्य्याः छदनान्येकादश कुर्यात्। एवमन्यदपि व्याख्येयम्। इदानीमौदुम्बर्युच्छ्रयण वि-

धत्ते—य एवम् । यः पुमानेव मौदुम्बरोधर्मान्वेद विदित्वा च यथोक्तां मौदुम्बरीं यद्दीकुर्यति तदा, अपचितिं पूजा माप्नोति । अथवोक्त मौदुम्बर्य्योच्छ्रयणस्याप चितिसाधन-नामाख्यायिकयोपपादयति—प्रजापतिः । पूर्वं प्रजापति-रपचितिं प्राप्नवानीत्यकामयत । किञ्च । उदुम्बरउर्कहे-तुत्वादूर्गत्वम् । अत्रञ्च साम यतः सामात्मकम् । तस्मात् सामगेभ्यः साम गायन्तीति सामगाः तेभ्यरपचितिं पूजां करवाणीति । अहं प्रजापतिः करवाणीति सम्बन्धः । अतो यः पुमानेवं यथोक्तलक्षण मौदुम्बरीं कृत्वोच्छ्रयति । सोऽप-चितिमि वाप्नोतीत्येवेति ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे, …विंशब्राह्मणाख्ये द्वितीयब्राह्मणे पञ्चमाध्याये । तृतीयः खण्डः ।

---

## अथ चतुर्थः खण्डः ।

अथ सविशेषं यूपं निरूपयितु मुपक्रते । यूपं करोति स चीरं चीरवृक्षप्रकृतिकं मूले स्थूलं नालाग्रं सूक्ष्माग्रं मध्ये वातु रूपं यूपं करोति कुर्य्यादित्यर्थः । तत् प्रशं-सति—वज्रो वै । यूपो वज्र एव । तथा च तैत्तिरीयकम्—इन्द्रो वै वमाय वज्रं प्रहरन् स त्रेधा व्यभजत् स्पृहतीयं यूपस्थानीयमिति । यस्मै यजमानार्थं वज्रेणैव भ्रातृव्यं यज्ञविघ्नकारिणं राक्षसं प्रतिहरति । यूपस्याष्टाश्रिकरणं विधत्ते—अष्टाश्रिः । तस्य अष्टसङ्ख्यका अश्री करोति कुर्या-

दिति दिक्षु चतस्रो विदिक्षु चतस्र इति। तत् प्रशंसति— दशदिशः। तथा सति ऊर्ध्वाधः सह दिग्भ्यां दश दिशः। परिगृहीतवान् भवति। अतश्च यूपे यूपविषये, उभयतः इयोः पार्श्वयोः पाङ्क्तिं पञ्चसङ्ख्यां करोति कृतवान् भवति। पञ्चदश पंक्तिरिति सङ्ख्यासाम्यात् विकल्पं न धर्मान्तरं दर्शयति—पञ्चदश। पञ्चदशरत्निं वा यूपं कुर्यात्। यूपस्य काम्यानि प्रकृतद्रव्याणि दर्शयति—पालाशम्। पुष्टिकामस्य पालाशप्रकृतिं यूपं कुर्यात्। एवमन्यदपि योज्यम्। यच्चिव यत्राङ्गं प्रक्रिया वैकङ्कतादिकं वृक्षजात मस्ति तत्प्रकृतिकं यूपं पशुकामस्य कुर्यात्। पालाशेष्वेव वर्जनीयान् प्रतिज्ञापुरःसरं दर्शयति—तत्र वर्जनीया भवन्ति। तत्र वर्जनीया गड्डुली ग्रन्थियुक्तः। व्रणितः पक्ष्यादिकृतव्रणोपेतः व्यावृत्तः विरुद्धावृत्तः अप्रदक्षिणावृत्त इत्यर्थः। कुठिः सुण्ठः कुटिलो वा। कुब्जः कुब्जीवत्क्राग्रः। शूलः तीक्ष्णाग्रः। दग्धो दावाग्निना शोषितः। शुष्को नीरसशुषिरः सच्छिद्रः। घुणदग्धः कृम्यादिभक्षितः इत्येते अप्रशस्ताः। प्रतिज्ञापूर्वकमुपादेयान् दर्शयति—अथ प्रशस्ताः। अथ वर्जनीयानन्तरं प्रशस्ता उच्यन्त इति शेषः। ऋज्वावर्त्ताः प्रदक्षिणावर्त्ता अनुपूर्वसमाः। अनुपूर्वेण समाग्रपलाः। आदयः प्रशस्ता उपादेया इत्यर्थः। यूपस्याग्निदेवतां सप्रतिज्ञं दर्शयति—यूपस्याग्नि। अथ यूपस्याग्निदेवतान्युच्यन्त इति शेषः। पूर्वीया असौ अग्निदेवता अन्यत् समानम्। या विदिशः सन्ति ता विदिशस्ते प्रसिद्धा आदित्यादयो यथासङ्ख्यं तिष्ठन्ति। अपराजिता यस्यां

दिशि देवा असुरैः पराजिता नाभवन् सा अपराजिता अधरा दिगित्यर्थः। सापि ऊर्द्धायां दिशि साध्याश्च- हन्ति। तद्देवत्येभ्यः। यथोक्तयूपं प्रशंसति—सर्वदेवत्यो वै अतः सर्वदेवत्यएव यूपः किञ्च यूप अनेकाश्रितत्वाद्बहु- रूप एव सन् वज्रीभूत्वा वज्रात्मकत्व प्रतिपद्यते देवानुप- तिष्ठते। प्रकारान्तरेण यूप मेव प्रशंसति—ते देवाः। प्राप्तयूपास्ते देवाः प्रजापति मुपाधावन् उपेत्य चैतेन लब्धा- नुग्राः सन्तो यूपेन वज्रात्मकेन तेन राक्षसान् प्रति हरन्ति आरोधयन्ति आवृण्न्ति एव। तथा आयोधयन्ति तैः सह युद्धं कुर्वन्ति। तत्तेन यूपस्य यूपत्वम्। तत्रैव धर्मान्तरं विधत्ते—मूल मरत्निं तस्य मूलं सत्वच मरत्निप्रमाणं नि- खनेन पित्रादिसम्बन्धेन यूपं पुन स्तौति—तस्य यत्रै खा- न्यम्। तस्य यूपस्य यन्नैखान्यं यन्निखन सम्बन्धि स्थानं तत्पितॄणा माश्रयं यदूर्द्ध स्थान तन्मनुष्याणाम्। रशनाया यूपे बद्धा पादभं मध्या रज्वा अयत् स्थान।तदोषधिवनस्प तीना मधिष्ठातृदेवतानामित्यर्थः। रशनाया ऊर्द्धं यत् स्थानं तद्विश्वेषां देवाना माश्रय इत्यर्थः। धर्मान्तराणि दर्शयति—आञ्जावयम्। यूप माञ्जावयन्त्वभिषिञ्चेयुः तथा अन्न कुर्वन्ति किञ्च अहतेन वसनेन वस्त्रेण आच्छादयन्ति आच्छादयेयुः। यथोक्त माञ्जवनादिक प्रशंसति—तं ग- न्धर्वा तदेतदा प्लव गन्धर्वाणा मप्सरसा चार्थ कृतं भवती त्यर्थः तदीय चषालं तदूर्द्ध प्रदेशं चेन्द्रादिसम्बन्धेन प्रशं- सति—इन्द्रस्य। तस्य यच्चषाल तदिन्द्रस्य सम्बन्धि चषा- लस्योर्द्ध यदङ्गुलमात्र काष्ठं तत्साध्याना देवानां स-

स्थिं। अथ सन् धर्मान्तर विधत्ते—प्राचीम्। तं यूप प्राचीं दिशं प्रति नमति सन्नमयेदित्यर्थः। एतद्वै एतदेव प्राचीसन्नमनं विर्ष्णोदेवस्य परमुत्कृष्ट स्थानम्। पुनर्यूपं तदीयशरीरादेस्तत्तादात्मकल्पोपवर्णनं प्रशंसति—तस्य-सेवः। तस्य यूपस्य शरीर वसन्तादि ऋतवः शिरः संवत्सरः रूपाणि वेदाः च एवं वेद संवत्सरे एव प्रतितिष्ठति दीर्घायुर्भवतीत्यर्थः॥ ४॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीय ब्राह्मणे
पञ्चमप्रपाठके चतुर्थखण्डः।

---

अथ पञ्चम खण्ड।

अथ सवितृर्णां सन्ध्या प्रश सापूर्वकमाख्यायिकया निरूपयितुं ब्रह्मवादिनां प्रश्न तावदुपस्थापयति—ब्रह्मवादिनो वदन्ति। अर्थस्त्वतिरोहित एव। उत्तर वक्तुमुपक्रमते—देवाश वा। पुरादेवाश्चासुराश्चास्पर्धन्त तत्र ते देवै सह स्पर्धमाना असुरा दानवा आदित्यमभिलक्ष्य बोढुं मभ्यद्रवन् तदानीं स आदित्यस्तेभ्योऽसुरेभ्यो विभेत् अतस्तस्यादित्यस्य हृदयं कूर्मरूपेण सङ्कुच्यातिष्ठत्। ततः किमित्यत्राह—स प्रजापति। स भीत आदित्यः प्रजापतिमुपाधावत् तस्य समीपं प्राप्तवानित्यस्यार्थस्य रक्षणाय प्रजापति रेतद्वक्ष्यमाणमेयज प्रतीकार मपश्यत्। ऋत मनृतवर्जनम्। सत्यं यथार्थभाषणम्। ब्रह्म कर्म्मे दादिकर्म्म।

ओङ्कारं प्रणवम्। त्रिपदां पादत्रयवतीं गायत्रीं चेति। किञ्च यथोक्तस्य भेषजस्य ब्रह्मणोमुख प्रधानम् इत्यपश्यत् अतस्त्वेवं चि तत इत्यत्राह—तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते। यस्मादेवं तस्मात् ब्राह्मणशब्दः क्षत्रियवैश्ययोरप्युपलक्षणन्तयोरपि तत्राधिकारात् स्वल्वाप्यहोरात्रस्य संयोगे अहोरात्रयोः सन्धौ भव्यत्सन्ध्यामुपास्ते स ज्योतिषि नक्षत्रस्थापन्नेन पूर्वज्योतिषा सहितेन कालेन आज्योतिषोदर्शनात् आगामिनो ज्योतिषो दर्शनपर्य्यन्तम् अन्तरालो यः कालः स अस्य सन्ध्योपासनस्य कालः सा सन्ध्या तदेव सन्ध्यायाः सन्ध्यात्वम् किञ्च साय मासीन उपविष्टः सन्ध्यामुपास्ते तया सन्ध्यया वीरस्थानं बलवत्स्थानं जयति प्राप्नोति। अथ पुनः सन्ध्याकाले अप उदकानि यत् प्रयुङ्क्ते ऊर्ध्वं विक्षिपति तत्र तावदूर्ध्वं विप्रुषो बिन्दवः वज्रीभवन्ति वज्रीभूता ता विप्रुषो असुरान् प्रति योद्धुमागतानपघ्नन्ति ततो देवा विजयिनो अभवन्। असुरास्तु पराभवन्ति पराभूत्वा ता अभवन् किञ्च य एव मुक्त प्रकारेण वेद अस्य वेदितुः भ्रातृव्य शत्रुरात्मना स्वेनैव पराभवति।

तथा सायञ्च प्रातश्च सन्ध्यां यदुपास्ते तथा द्विविधसन्ध्यागतस्य वीरस्थान सतत सर्वदा अविच्छिन्नं भवति योऽप्येवं वेद तस्यापि यथोक्तं फलं भवतीत्यर्थः। तथा च तैत्तिरीयका आमनन्ति—तस्मादुत्तिष्ठन्तम् अद्भि तानि रक्षांस्यादित्यं योऽभमन्ति यावदस्तं गावाथि इव एतानि रक्षांसि नाशयेत् गायत्र्याभिमन्त्रितेनाम्भसा शाम्यन्ति तदुक्तं वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याभिम-

श्रिता अप ऊर्ध्वं विक्षिपन्ति । ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहा रुधिर प्रतीयन्तीत्यादि ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
पञ्चमप्रपाठके पञ्चमः खण्डः ।

---

अथ षष्ठखण्डः ।

अथ चन्द्रस्य क्षयवृद्धी निरूपयितुं प्रतिजानीते—अथैषा । अथेति वाक्योपक्रमे । एषा वक्ष्यमाणा चन्द्रमसः सम्बन्धिनी क्षयवृद्धिः यद्यपि द्विवचनेन भवति तथापि बाहुलकादेकवचनम् । तस्य विवरणं यस्मिन्नेव काले चन्द्रमाः क्षीयते कलाभिः यथा कलाभिराप्यायते च । तद्वयमनुव्याख्यास्यामोऽनुवर्णयाम इति । तत्र प्रथमं तस्य प्रकारं दर्शयति—पूर्वपक्षे । ये एव देवाः पूर्वपक्षे शुक्लपक्षे दीक्षन्ते सोमपानाय दीक्षां कुर्वन्ति ते दीक्षिता देवा अपरपक्षे कृष्णपक्षे सोमं भक्षयन्ति । कथं तत्र सोमपानविषये इमानि वक्ष्यमाणानि पात्राणि उपधीयन्ते तेषामेव प्रदर्शनम्—पृथिवीलोक पात्रम् अन्तरिक्षलोकं पात्रम् द्यौः द्युलोकमेकं पात्रमिति । तत्रादित्याः आदित्याख्या देवा दिव्येन पात्रेण प्रथमं तेधा विभागी पाद्यभामात्मक पञ्चकल पञ्चकला यस्य तं सोमं पञ्चमीम् भक्षन्-

सयोगे द्वितीया। प्रतिपदारभ्य पञ्चमीपर्य्यन्तं भक्षयन्ति प्रतिदिवसमेकैका कला पिबन्तीत्यर्थं। ततस्ते दीक्षिता रुद्राख्या देवा अन्तरिक्षे अन्तरीक्षलोकात्मकत्वेन पात्रेण द्वितीय पञ्चकलं दशमी षष्ठीमारभ्य दशमीपर्य्यन्तं भक्षयन्ति ततस्ते दीक्षिता वसवो वस्वाख्या देवा पृथिव्याः पात्रेण तृतीय तृतीयभागात्मक पञ्चकल पञ्चदशीपर्य्यन्तं पूर्ववद्भक्षयन्ति। ततश्चन्द्रमसः षोडश्येका कलावशिष्यते अतः। ततश्चन्द्रमाः षोडशकलानन्तर सोऽवशिष्टैककला सोमः ओषध्यादीन् प्रविशति तथाच सति इन्द्रज्येष्ठाः इन्द्रप्रमुखाः सोमपास्ता सर्वे देवास्तु सोम निलक्षता तादृश सोमवर्ती रात्रिं यमन्ते तत्र दृष्टान्तः यथेत्यादि। यथा इव जरया प्रलय नाम सुपगच्छमानम् उपगच्छन्तं व्याधिगत रोगिण पितर पितामह प्रपितामह वा अभिलक्ष्य मरिष्यति नवति सन्दिहाना. पुत्रादयस्तां रात्रिं वसन्ति तद्वदित्यर्थं। तथैव देवाना सहवासनिमित्तेन अमावास्या अमाग्रहः सहार्थे अमावस्या त्वम् अमा सह नवसत्यस्यामिति व्युत्पत्तेरित्यर्थं। यस्मादेव तस्मादेव खलु अमावस्याया न किञ्चिदप्यर्थो नस्य भवति अध्येतास्तस्य वर्णात्मकस्य वेदादे रस्मीयोमात्मकत्वात् तत्र सोमस्यादर्शनादित्यर्थं। अथ तस्य तद्विप्रकार प्रतिज्ञापूर्वक दर्शयति— अथ सम्भरणम्। अथ अपदर्शनानन्तर सम्भरण चन्द्रमसः कलाभिः प्रापणम् उच्यत इति शेषः। कथ यत चान्द्रः कलापूर्व अनुप्रविष्टा ताभ्य ओषधिभ्यो वनस्पतिभ्यः अपुष्पा कलयन्तो वनस्पतयस्तेभ्य ओषध पशवश्चादित्याय

ब्रह्मसम्बन्धी वेदः तस्माद् ब्राह्मणाय स्वतोवितोवितं चन्द्रमसमयम्भ सम्यङ्नयन्ति । यस्मादेवं तस्मात्सानाय्यस्य सनयनसम्बन्धिन्चन्द्रमस सानाय्यत्वं यथा एभ्य श्रोष-धीभ्य. सत्रोय स्वात्मनि सनयत दधिपयसोः सानाय्यत्वम् । तथा तैत्तिरीया आमनन्ति—एतस्मै सत्रयैतेति तत्पश्चभ्य श्रोषधीभ्योऽध्यात्मन् समनयन् प्रत्यदुत्पद्यत्समनयत् सानाय्यस्य सानाय्यत्वमिति एव मत्रापोत्यर्थः । अथेदानी अनुमत्यादिपतित्वेन चन्द्रमस प्रशसति—चन्द्रमा वै । पति रनुमत्यादीना रेतस आधायत्वात् अनुमत्यादीना स्वरूप-प्रदर्शन—या पूर्वा । या पूर्वा चतुर्दशीविद्धपौर्णमासी सानुमतिरित्युच्यते—योत्तरा । योत्तरा सम्पूर्णचन्द्रोपेता सा राका या पूर्वा । या पूर्वाद्दृष्टचन्द्रामावास्या सा सिनी-वालीत्यभिधीयते । योत्तरा नष्टेन्दुकलामावास्या सा कुहू-रित्युच्यते एतायत्रमसो जाया इत्यर्थः । अतय पुमान् बुद्धिमनुगचन्द्र त पश्यति अन्य न पश्यति अस्य दृष्टत्वात् तादृशमेव मिथुन भवति । अनुमत्यादि पर्वचतुष्टय युग-चतुष्टयसम्बन्धित्वेन प्रशसति—पुष्ये वा पुष्यत्वम्भिन्यम्रा-निति पुष्ये कलियुगे अनुमतिश्रेष्ठेति ज्ञेया तथा द्वापरे सिनीवाली श्रेष्ठा भवतीति । खार्वायाम् । खर्वौ सर्वौ धर्मा-धर्मौ यस्य त्रेताया खार्वा तस्य राका श्रेष्ठा तथा भवेत् । कुहू. कृतपर्व कृतयुगसम्बन्धि पर्व भवेत् इति । अनुमत्या-दीना लक्षणानि दर्शयति—न्यूने वा । न्यूने चन्द्रे कला-रहिते सति पौर्णमासी ममतिं विद्यात् यस्मिन्दिवे चन्द्रमा वा दृश्येत सा ऽमावास्या सिनीवालीति ज्ञेया यदि चन्द्रमा

सम्पूर्णो दृश्यते सा पौर्णमासी राका। यत्र तु चन्द्रो न दृश्येत साऽमावास्या कुहूरिति ज्ञेया ॥ ६ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्‌विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
पञ्चमप्रपाठके षष्ठखण्डः।

---

अथ सप्तमखण्डः ।

अथ स्वाहाकाराख्यां देवतां प्रश्नपूर्वकं निरूपयितुं प्रजापतिं प्रति ब्रह्मवादिना प्रश्नं तावदुपस्थापयति—स्वाहा वै निगदसिद्धमेतत्। उत्तरमाह—स्वाहा वै सत्यसम्भूता। स्वाहा सत्येनैव सम्भूता नान्येन। ब्रह्मण एव दुहिता ब्रह्मणा प्रकर्षेण कृता। सा तस्यैव ऋषिणा समानगोत्रा। तस्या अक्षराणि सकारवकारहकारात्मकानि त्रीणि पदमेकं एतावन्त्येवेति मन्तव्यम् अस्यै अस्या वर्णरूपाणि शक्रः पद्म पद्मशब्देन पद्मवर्णा उपलक्ष्यते सुवर्णवर्णयेति वचः। अस्यास्त्वार ऋगादयो वेदा उच्छ्वासा स एव तस्याः शरीरं यानि निरुक्तादीनि षड्‌वेदाङ्गानि तान्येव तस्या अङ्गानि ओषधिवनस्पतय एवास्या लोमानि। तथा द्वे शिरसी तयोरेव प्रदर्शनं अमावास्यैकं शिरः पौर्णमासी द्वितीयं शिरः तत्रैव च यागकरणाच्चन्द्रादित्यौ चन्द्रादित्यावेवास्यायक्षुषी इत्यर्थः। आज्यभागाख्ये कर्मणी एवास्याः द्रुत द्वयमत्र मुखमित्यर्थः। वागे वा दक्षिणा सैव प्राहृता वरर्थं तस्याः हृद्रयमारे एव सामनी एव मार्ष्ट्र इति शेषः। अत्ययक्षः

सामवेदाख्य: उच्छ्रास: ऋगादय स्त्रयो वेदा गति: पादा इत्यर्थ:। एवंविधा या स्वाहा सा एव स्वधा नान्या तथा वषट्कार: सैषा स्वाहा देवेषु देवयज्ञेषु वषट्कारभूता सतो प्रयुज्यते सैव तथाभूता पितृयज्ञेषु प्रयुज्यते इत्या-शयनिरूपणम्। शकटोमुखो पृथिवो मधिष्ठायान्तरिक्षेण मार्गेण विपर्येति स्वाहा सर्वं स्वर्गादिफलं व्याप्नोतीति। तस्या. स्वाहाया अग्निर्दैवतम् अग्निरेव देवतारूप ब्राह्मण: तत्प्राधान्यात्। प्रजापतये इत्यत्रोऽन्य: कश्चित् सर्वाणि भुवनानि परिभवितुं न शक्नोति। अतस्ते तुभ्यं वयं यत्-कामा यत् फलं कामयमाना जुहुम: तत् फल नो अस्मा-कम् अस्तु किञ्च वय रयोणा धनाना पतय: स्याम भवेम स्वाहेत्यनेन स्वाहाया: प्रजापतिपरिग्रहो दर्शित:। यथोक्त-रूपां स्वाहां प्रशंसति—तस्यात् तृप्तिम्। तस्या: स्वाहा-कारपरिग्रहेण तृप्तस्य प्रजापते: तृप्ति मनु यजमान: प्रजया पुत्रपौत्रादिकया पशुभिर्गवादिभि स्त्वाद्येन तेजसा ब्रह्मवर्चसेन तृप्यति इति शब्दोऽध्याय-परिसमाप्ति-द्योत-नार्थ. ॥ ७ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे पञ्चमप्रपाठके सप्तमखण्ड:।

## इति पञ्चमप्रपाठक:।

—

## अथ षष्ठः प्रपाठकः।

### अथ प्रथमः खण्डः।

षष्ठाध्याये अद्भुतशान्तिं निरूप्यते। तत्र प्रथमं सावशेषां शान्तिं दर्शयितुं प्रतिजानीते—अथातोऽद्भुतानाम्। इष्टप्राप्तिसाधनकर्मनिरूपणानन्तरम् ‘अतोऽनिष्टपरिहारसाधनकर्मनिरूपणस्य प्रस्तुतत्वादद्भुतानां दैविकाना मनिष्टप्राप्तिसूचकानां कर्मणां तत्सूचितदोषनिर्हरणसाधनाख्यं व्याख्यास्यामः विशेषेणानुवर्णयामः। प्रतिज्ञातां शान्तिं विधत्ते—पालाशानाम्। पलाशसमिद्भिरष्टसहस्र मष्टोत्तरसहस्रं जुहुयात्। तत्र देवताप्रकाशकान्मन्त्रान् दर्शयति—ऐन्द्र्याश्च। ऐन्द्रः इन्द्रदेवत्यः सर्वेऽपि देवास्तद्धिताऽत्मा ऐन्द्रादयो वैश्वान्ता बह्वृचः ताभिर्जुहुयादित्यर्थः। ता एव ऋच. प्रतीके दर्शयति—इन्द्रायेन्दोमरुत्वते। एता ऋचः छन्दो ग्रन्थव्याख्याने स्पष्टमस्माभिर्व्याख्याता इत्यत्र न व्याख्या क्रियन्ते। यथोक्तं गन्धैर्हीमं दर्शयित्वा इदानी तदङ्गत्वेन तेषा मेव इदं स्वस्तिवाचन दर्शयति—एतानि साम। एतानि यथोक्तानि मन्त्रवर्णानि साम प्रभृति सामगानपुरःसरम् अष्टशतमष्टोत्तरशत प्रत्येकं जपित्वा स्वस्तिवाचनं कृत्वा पुण्याहवाचन कुर्यादित्यर्थः। तथाच सति एषां यजमानानां स्वस्ति अनिष्टपरिहारद्वारेण मङ्गलं भवत्येव। स्वस्तिवाचनमन्त्रान् प्रतीकैर्दर्शयत्येव। स्वस्तिदाविशस्पतिः एते मन्त्रा उत्तराग्रन्थे स्पष्ट मस्माभिर्व्याख्याता। स्वस्तिवाचनमन्त्राणां

होमसम्भारोपस्थाने योग दर्शयति—एतैः सम्भाराणा मुपस्थानम्। एतैः स्वस्तिदाविशस्पतीत्याद्यैर्मन्त्रैः सम्भाराणा मुपस्थानं कृत्वा शेषं कर्मसमापयेदित्यर्थः। तथा सति अस्य यजमानस्य स्वस्ति मङ्गलं भवत्येवेदिति तिरादरार्था याज्ञिप्रश्नार्थौ। लिङ्गादन्यत्र विनियुक्ताना मप्येषा मन्त्राणां स्तुत्या सम्भारोपस्थाने विनियोगः यथा ऐन्द्रा गार्हपत्य मुपतिष्ठत इति स्तुत्वा ऐन्द्र्याः ऋचो. गार्हपत्योपस्थाने विनियोगः ॥ १ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
पञ्चमप्रपाठके प्रथमखण्डः।

---

अथ द्वितीयखण्ड.।

अतः सप्रश्न अद्भुतोपद्रवे ग्रामे शत्रुविजयार्थं होम विशेष माख्यायिकापुर सर दर्शयितुमुपक्रमते—देवाश्च वा असुराश्च। एषु लोकेषु पृथिव्यादिलोकविषये देवाश्चासुराश्च परस्परं मस्पर्द्धन्त असुरेभ्य. स्पर्द्धमाना देवाः प्रजापतिमुपाधावन् ततः प्रजापतिस्तेभ्य उपसन्नेभ्यो देवेभ्यो एता वक्ष्यमाणां देवीं देवसम्बन्धिनी मद्भुतोपद्रवनिर्हरणसाधनभूतां प्रायश्चित्तिं प्रायच्छदिति। ततः किमित्यत आह—ते ततः शान्तीका अतोऽनन्तरमेव देवाः शान्तोकाः प्रहरणार्थे शक्त्योरीकगितिविहित ईकक्प्रत्ययो याकुलकाद्याग्नेरपि भवति। तेन प्रजापतिदर्शितशान्तिहोमाः हुताः सन्तः असुरानभ्य-

भवन् ततो देवाः शत्रुकृतोपद्रवरहिता अभवन् असुराश्च पराभूता आसन्। किञ्च य एवं उक्तप्रकारेण वेद अस्य भ्रातृव्यः शत्रुः आत्मना स्वेनैव पराभवति यदर्थमाख्यायिका तं होमं सेतिकर्त्तव्यताकं दर्शयति—अथ पूर्वाह्न एव। अथशब्दो वाक्योपक्रमे पूर्वाह्न एव नैत्यमग्निहोत्रं हुत्वा वीरणान् तत्संज्ञान् तृणविशेषान् फलवर्त्तीं प्रियङ्गुकामपामार्गं प्रसिद्धमित्येतानि दर्भादीनि सम्भारद्रव्याणि स्वयमाहरेत् यजमानः पुत्रादिना वाहारये दाहृत्य च तानि निष्णातः प्रयतो वातः शुचिः सन् शुक्लवासा नित्यतन्त्रेण स्थण्डिलमुपलिप्य गोमयेन तत् स्थण्डिलमद्भिः प्रोक्ष्य स्वशाखोक्तविधिमनतिक्रम्यदर्भैः स्थण्डिलमुल्लिख्य पुनरद्भिरभ्युक्ष्य तत्राग्निमुपसमाधायेन्द्रायेन्द्रो मरुत्वत इत्याद्यैरिन्द्रादिदेवत्यैरष्टभिः पूर्वोक्तैर्मन्त्रैर्वक्ष्यमाणैर्द्रव्यैरिन्द्रादीनुद्दिश्य प्रत्येकमष्टोत्तरशतं जुहुयादिति शेषः। द्रव्याणां प्रदर्शनं—क्सरं मुद्गादिमिश्रैः स्थण्डिलैरिति पक्वमन्नम्। रक्तपायस रक्तशालितण्डुलैः पक्वं पायसम्। घृतपायस घृतमिश्रेण क्षीरेणैव घृतपायसम्। अन्यत् प्रसिद्धम्। एते सर्वे ओदनादयो द्रव्यविशेषाः पृथक् कृतोत्तरायरवः। एतेषां मभावे घृतोत्तरायरव एव ग्राह्य इत्यर्थः। अथवा सर्वेषां तेषामलाभे पायसः परमान्नम ग्राह्यमित्यर्थः॥ २॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे,

षष्ठप्रपाठके द्वितीयखण्डः।

अथ तृतीयखण्डः।

इदानीमैन्द्राद्भुतविशेषं दर्शयितुं तदङ्गत्वेन किञ्चिन्नियमान् दर्शयति—स प्राचीम्। वक्ष्यमाणाद्भुतविशेषनिमित्तान् प्राचीं दिशं मन्वीक्ष्य वर्त्तते होमकरणार्थं प्रवर्त्तेत। वक्ष्यमाणानामद्भुतविशेषाणां प्राच्यां दिशीन्द्रस्वभिनिखविशेषा दिदानीं निमित्तविशेषान् दर्शयति—अथ पुनर्यस्य पुरुषस्य सम्बन्धिनां नखिच्छत्रादिसम्बन्धः तदादीनां दरणं भेदन आयासः चित्तपीडा अथवा राजकुलेन सह विवादो भवेत्। तथा यानमान्दोलिका तदादीनां भञ्जनेषु तेषु भग्नेष्वित्यर्थः। अथवा गजवाजिप्रभृतयो ह्यतिप्रमीयन्ते एवमादीन्यासत्रादितेन्द्रस्थानानि। तान्येतानीन्द्रदैवत्यानि प्रायश्चित्तनिमित्तानि भवन्तीत्यर्थः। एवं निमित्तानि दर्शयित्वा इदानीं तद्दोषनिबर्हणं नैतिकर्त्तव्यताकं होमं दर्शयति—इन्द्रायेन्द्रीमरुत्वत। स्थालीपाकं स्थालीपाकविधानमनतिक्रम्य त्वक् श्रपयित्वा इन्द्राग्नेन्द्रीमरुत्वत इत्यनया ऋचा हुत्वा पुनरिन्द्राय स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः पञ्चभि राज्याहुतिर्जुहोति जुहुयात्। ततस्तत्त्वं नूनातिरिक्तप्रायश्चित्तार्थं भूः स्वाहेत्यादिभिः व्याहृतिभिः हुत्वा अथ यथादिन्द्रायेन्द विश्वस्या मृचि अष्टोत्तरशत साम गायेत् अनन्तरं स्वस्तिवाचनादिकं पूर्ववत् कुर्य्यात् ॥ ३ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे षष्ठप्रपाठके तृतीयखण्डः।

अथ चतुर्थखण्ड ।

शान्तिनिमित्तहोमविशेष दर्शयितु तदर्थमपि किञ्चि नियम दर्शयति—सदक्षिणा दिश । स वक्ष्यमाणादद्भुतविशेषनिमित्तवान् होमाधिकारो दक्षिणान्दिशमन्वीक्ष्य वर्त्तते होमार्थं निमित्तविशेषाणा दक्षिणा दिशोऽपि याम्यत्वाविशेषात् । इदानी निमित्तविशेषान् दर्शयति—अथ य दास्य । अथ पुनर्यदा अस्य पुरुषस्य सम्बन्धिषु प्रजया पुत्रादिकाया सहितेषु पशुषु गवादिषु स्वशरीरे वा अरिष्टानि प्रादुर्भवन्ति । अथवा अनेकविधा ज्वरादयो व्याधय: प्रादुर्भवन्ति । तथातिस्वप्रदर्शनम् । अस्वप्न मनिद्रा । अतिभोजन भस्मकरोगवशेन बहुतराग्यभक्षार' । अभोजन मरुच्यादिना । आलस्य ध्रुवालसनावणम् । अजीर्ण क्षुदभावेन भुक्तस्यान्नरसापचनम् । अतिनिद्रा एवमादीनि नेत्रादिदोष । तान्येतानि सर्वाणि यमदेवत्यानि अद्भुतानि प्रायश्चित्तनिमित्तानि भवन्ति । एव निमित्तविशेषान् दर्शयित्वा इदानीं तद्धेतुदोषनिवर्त्तणसाधन होम सेतिकर्त्तव्यताक दर्शयति—नाकेसुपर्णमिति स्थालीपाक हुत्वा पञ्चभि राज्याहुतिभि रभिजुहोति यमाय स्वाहा प्रेताधिपतये स्वाहा दण्डपाणये स्वाहेश्वराय स्वाहा सर्व पापशमनाय स्वाहा इति जुहुयात् । तत. तत्र न्यूनातिरेकप्रायश्चित्तार्थं व्याहृतिभिर्हुत्वा अथ पश्चान्नाकेसुपर्णमि त्यस्यामृचि साम गायेत् पूर्ववत् स्वस्तिवाचन कुर्यादिति॥४॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड् विंशब्राह्मणाख्ये द्वितीयब्राह्मणेषष्ठप्रपाठके चतुर्थखण्ड ।

अथ पञ्चमखण्डः।

अथ वारुणनिमित्तविशेषं दर्शयितुं यदर्थनियमं दर्शयति—स प्रतीची दिशम्। स वक्ष्यमाणनिमित्तवानधिकारी प्रतीचीं पश्चिमां दिशं अन्वीक्ष्यावर्तते होमकरणार्थं वर्तेत निमित्तविशेषाणां प्रतीच्या दिशश्च वरुणसम्बन्धित्वाविशेषादिदानीं निमित्तविशेषान् दर्शयति—अथ यदास्य अथ यदास्य पुरुषस्य चैत्रग्रहसस्थितेषु चैत्रस्थितेषु च धान्येष्वीतयो वक्ष्यमाणाः प्रादुर्भवन्ति। ईतीनामेव प्रदर्शनमीतबोऽनेकविधा अनेकप्रकाराः खलु आखुमूषकः पतङ्गः पक्षिविशेषः पिपीलिका प्रसिद्धाः मध्वका मधुमक्षिकाविशेषाः भौमकाः भूमौ भवा क्षुद्रजन्तवः शुकाः कीराः सरभकाः प्रसिद्धाः सोच्छका सूक्ष्मसम्बन्धिन इत्येवमादीनि अतिवृष्ट्यादीनि च सर्वाण्येवाद्भुतानि वरुणदैवत्यानि प्रायश्चित्तनिमित्तानि भवन्ति तन्नेतुरूपनिबर्हणसाधनं होमं सेतिकर्तव्यताकं दर्शयति—घृतवतीति। घृतवतीभुवनानामभिश्रिया एषा ऋक्। अन्यत् पूर्ववद्व्याख्येयम् इति ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ
प्रकाशे षड्विंशब्राह्मणे द्वितीयब्राह्मणे
षष्ठप्रपाठके पञ्चमखण्डः।

---

अथ षष्ठखण्डः ।

वैश्रवणनिमित्तिकं होमं दर्शयितुं तदर्थमपि नियमं दर्शयति—स उदीचीं दिशम् । स वक्ष्यमाणनिमित्तवान् अधिकारी उदीचों दिशमन्वीचा वर्त्तेत । होमार्थं निमित्तविशेषण उदीच्यादिशश्च कुवेरसम्बन्धित्वाविशेषादिदानीं निमित्तविशेषान् दर्शयति—अथ यदास्य । अथ यस्य पुरुषस्य यदा कनकादिभ्यो वियोगो भवति अथवा आरब्धा वा विपद्यन्ते निष्फला भवन्ति । अथवा अन्यानि क्रूराणि पिशाचादिदर्शनादीनि । अपि वा मित्राणि सुहृदो वियोज्यन्ते विद्विषन्ति अथवा अरिष्टानि दुःखसूचकानि वयांसि काकादीनि स्वगृहे मध्यासन्ते गृहे वल्मीकभौमानि भूमौ भवन्ति एतानि जायन्ते प्रादुर्भवन्ति । अथवा छत्राक छिलिधं गृहोपरि दृश्यन्ते । अथवा सदा अभिनिलीयन्ते स्वगृहे एवमादीन्यन्यान्यपि सर्वाण्यद्भुतानि वैश्रवणदैवत्यानि कौवेराणि प्रायश्चित्तनिमित्तानि भवन्ति । तद्दोषनिवर्हणसाधन होम सेतिकर्त्तव्यताकं दर्शयति—अभित्यं देवमिति । अभित्य देवं सवितार मोण्योरिति पूषा ऋक् । अन्यत् पूर्ववद्व्याख्येयम् इति ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे षष्ठप्रपाठके षष्ठखण्डः ।

---

अथ सप्तमखण्डः ।

अथाग्निदेवताकनिमित्तविशेषे होमविशेषं दर्शयितुं तदङ्गत्वेनादौ पृथिवीनिरीक्षणपूर्वकमावर्तनं दर्शयति— सा पृथिवी। होमार्थं वक्ष्यमाणनिमित्तानां पृथिव्याद्याग्नेयत्वादिविशेषादिदानीं निमित्तविशेषान् दर्शयति— अथ यदास्य नैवम्। रुदति रोदति। धूमायति अग्निं विनैव धूमः प्रचुरो भवति। अकस्मात् वृष्टिं विनैव सलिलमुन्निरति तथा सलिले प्रक्षिप्तः पाषाणः प्लवत् प्लवमान एव तिष्ठति न तु मज्जति निमग्नं मृतशरीरमुदके प्रक्षिप्तं नो प्लवति किन्तु निमज्जति किञ्चाकाले पुष्पञ्च फलञ्च फलपुष्पमभिनिवर्ततीति वृक्षमभितो जायते। तथा सति अश्वतर्या गर्भो जायते। अश्वतर्याः प्रजापतिना अरेतस्कत्वात् गर्भाभावः 'तस्मादश्वतरो न जायते अरेता हि' इति श्रुतिप्रसिद्धिस्तथा यदा यस्मिन् देशे हस्तिनी करिणी मज्जति निर्निमित्तं उदके, निमज्जति तथा यत्र यस्मिन् देशे भूकम्पो जायते तत्र तदा तद्देशाधिपती राजा विनश्यति किञ्च यदा गोष्ठं हस्तारोहेद् ग्रामं महिषी आरोहेद्वित्यनुषङ्गः आरण्यकमनुष्यगर्दभारोहणीयासम्भवाद् ग्राममहिषीति विशेषणमित्येवमादीनि ग्रामशूकरमर्कटारोहणादीनि तान्येतानि सर्वाण्यद्भुतानि अग्निदेवत्यानि प्रायश्चित्तानि भवन्ति तद्दुरितापूर्वनिवर्हणसाधनं होमं सेतिकर्तव्यताकं दर्शयति— अग्निन्दूतमिति। अग्निन्दूतं वृणीमहे इत्यनया ऋचा स्थालीपाकविधानेन चरुं श्रपयित्वा तं हुत्वा पुनरप्यग्नये स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः

पञ्चभि राज्याहुती रभिजुहोतीति जुहुयात्। पुनः व्याहृति रेवमायंयित्वायं व्याहृतिहोमान् हुत्वा ब्रह्मोक्षायामचि साममगायेत् ॥ ७ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे षष्ठप्रपाठके सप्तमखण्डः।

---

अथ अष्टमखण्डः।

वायुदेवताकनिमित्तविशेष होमविशेषे दर्शयितुं तदङ्गत्वेनादावन्तरिक्षनिरीक्षणपूर्वकमावर्तनं दर्शयति— सोऽन्तरिक्षम्। यथप्रमाणनिमित्तानामन्तरिक्षस्थे च वायु सम्बन्धित्वाविशेषादिदानीं निमित्तविशेषान् दर्शयति— अथ यदास्य। अत्र पुनर्यस्य देशे यदा अधिकभावाभ्याधिका अतिशयिता वाता शायन्ते वर्तन्ते। यद्य गता विति धातुः स्वरितेत्। अभ्रेषु पक्षाणि दृश्यन्ते। पर्वतादिषु निर्निमित्तत्वं प्राकृतविकृतरूपाणि दृश्यन्ते तथा अस्य गृहाणि खरो गर्दभः करभः क्रोलकः मन्यो मृगविशेषः कङ्कपोतादयः प्रविशाः गोमायुः क्रोष्टा एते प्रविष्टानि दृश्यन्ते उपर्यन्तरिक्षे च पांसवः धूलयः। मांसपेशी मांसखण्डः। अस्थिरुधिरे प्रसिद्धे। एतेषां वर्षाणि प्रवर्तन्ते तथा काकमिथुनानि दृश्यन्ते तथा रात्रौ नक्षत्रं धूमधूसं पश्येत् किञ्च शयकाय शयकः श्वानः यदा

प्रविशन्ति । वृक्षेभ्यश्च रुधिराणि स्रवन्ति । आकाशे राज-
कुलं पश्यति गन्धर्वनगरादिरूपं स्थितं दृश्यत इत्यर्थः ।
इत्येवमादीनि यान्येतानि सर्वाणि वायुदैवत्यान्यद्भुतानि
प्रायश्चित्तानि भवन्ति । तत्र तद्दुरितापूर्वनिवर्हणसाधनं होमं
विध्यन्तसहितं दर्शयति—वात आवात भेषज इत्येतया
ऋचा । अन्यत् पूर्ववद्व्याख्येयम् ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
षष्ठप्रपाठके अष्टमखण्डः ।

---

अथ नवमखण्डः ।

सोमनिमित्तकविशेषं होमविशेषं दर्शयितुं तदङ्गत्वेन
वृनिरोक्षणपूर्वकमावर्त्तनं दर्शयति—स दिवम् । स दिव-
मन्वीक्ष्यावर्त्तते । दिवा नक्षत्रगणनिमित्तानां च सोमदैव-
त्वादिदानीं निमित्तविशेषान् दर्शयति—अथ यदास्य ।
अथ पुनर्यस्य गोचरे यदा ताराद्यपाणि नक्षत्रवृष्टयः पतन्ति
जायन्त इत्यर्थः । उल्काश्च पतन्ति । दिशो धूमायन्ति
निर्निमित्तं धूमयुक्ता इव प्रदृश्यन्ते धूमकेतवः उपतिष्ठन्ति
तथा गवां शृङ्गेषु विषाणेषु धूमा जायन्ते गवां स्वित्यर्थः ।
तथा ता एव दृश्यन्तो ज्वालारूपा इव दृश्यन्त इत्यर्थः
किञ्च अन्तरिक्षे केसवो तेषु रुधिरं स्रवति न पयः । किञ्च
अत्यर्थं अतिबहुल हिमं पततीत्येवमादीनि सर्वाण्यद्भुतानि
सोमदैवत्यानि निमित्तानि भवन्ति । इदानीं तद्दुरिता-

केतवो ध्वजाः सदादीनि निःकारणं प्रज्वलन्ति । श्मशा-
नाश्च वालधोषु अङ्गाराः चरन्ति । पतन्ति तानि दण्डा-
दिभिः पताड़ितानि चर्म्माणि चर्म्मयुक्तानि भेर्य्यादीनि
कनिक्रन्दन्ते कुर्वन्तीति । एवमादीनि तान्येतानि सर्वाणि
विष्णुदेवत्यान्यद्भुतानि विष्णुदेवत्यानि प्रायश्चित्तनिमि-
त्तानि भवन्तीति । इदानीं तदेतद्दुरितापूर्वनिवर्हणसाधनं
होमं सविधानं दर्शयति—इदं विष्णुः । स्थालीपाकम् ।
स्थालीपाकविधानमनतिक्रम्य चरुं श्रपयित्वा इदं विष्णु-
र्विचक्रम इत्यनया ऋचा हुत्वा पुनर्विष्णवे स्वाहेत्यादिभिः
पञ्चभिर्मन्त्रैः पञ्चभि राज्याहुतिभिरभिजुहोति जुहुयात् ।
ततस्तन्न्यूनातिरिक्तप्रायश्चित्तार्थं व्याहृतिभिर्हुत्वा अथ
वाचोदस्यां वैष्णव्यामृचि सामाष्टोत्तरशतं गायेत् । शुद्धे
भूतले होमं कुर्य्यादिति दर्शयितुं भूशुद्धिहेतुं दर्शयति—
खननाद्दहनात् । खननात् कुद्दालादिभिः । दहनादग्निना ।
अभिमर्शनात् मन्त्रपूर्वक स्पर्शन गोभिराक्रमणेन च इत्यतः
खननादिभिश्चतुर्भिर्भूमिः शुध्यन्ते । तथा पञ्चमाद्गोमयेनोप-
लेपनाद्भूमिः शुद्ध्यत इत्यनुषङ्गः । सामगानानन्तरं कुर्य्या-
दित्याह—सम्भारान् । ततः सम्भारान् प्रागुक्तान् दर्भा-
दीन् होमसम्भारान् प्रदक्षिणं यथा भवति तथा तोयसमी-
पदेशमानीय ब्राह्मणाननुप्रवेश्य स्वस्तिवाच्य पुण्याहवाचनं
कृत्वा कर्म्मसमापयेदिति शेषः । सम्भाराणां मध्ये कस्य
उपद्रवणो तस्याभ्युक्षणाच्छुद्धिहेतुत्वेन विधत्ते—एतैः
सम्भारैः एतैर्यथोक्तैर्यदुपस्पृष्टमुपद्रुतं तद्व्य भ्युक्षेत्
स्वस्तिदा विशस्पतिरित्याद्यैः स्वस्तिवाचनमन्त्रैरभ्युक्षणा-